अस्मै तिस्रो अव्यथ्याय नारीर् देवाय देवीर्दिधिषन्त्यन्नम् ।
कृता इवोप हि प्रसर्स्रे अप्सु स पीयूषं धयति पूर्वसूनाम् २४२६

अश्वस्यात्र जनिमास्य च स्वर् द्रुहो रिषः संपृचः पाहि सूरीन् ।
आमासु पूर्षु परो अप्रमृष्यं नारातयो वि नशन्नानृतानि २४२७

स्व आ दमे सुदुघा यस्य धेनुः स्वधां पीपाय सुभ्वन्नमत्ति ।
सो अपां नपादूर्जयन्नप्स्व१न्तर् वसुदेयाय विधते वि भाति २४२८

यो अप्स्वा शुचिना दैव्येन ऋतावाजस्र उर्विया विभाति ।
वया इदन्या भुवनान्यस्य प्र जायन्ते वीरुधश्च प्रजाभिः २४२९

अपां नपादा ह्यस्थादुपस्थं जिह्मानामूर्ध्वो विद्युतं वसानः ।
तस्य ज्येष्ठं महिमानं वहन्तीर् हिरण्यवर्णाः परि यन्ति यह्वीः २४३०

हिरण्यरूपः स हिरण्यसंदृग् अपां नपात्सेदु हिरण्यवर्णः ।
हिरण्ययात् परि योनेर्निषद्या हिरण्यदा ददत्यन्नमस्मै २४३१

तदस्यानीकमुत चारु नाम अपीच्यं वर्धते नप्तुरपाम् ।
यमिन्धते युवतयः समित्था हिरण्यवर्णं घृतमन्नमस्य २४३२

अस्मै बहूनामवमाय सख्ये यज्ञैर्विधेम नमसा हविर्भिः ।
सं सानु मार्ज्मि दिधिषामि बिल्मैर् दधाम्यन्नैः परि वन्द ऋग्भिः २४३३

स ईं वृषाजनयत् तासु गर्भं स ईं शिशुर्धयति तं रिहन्ति ।
सो अपां नपादनभिम्लातवर्णो ऽन्यस्येवेह तन्वा विवेष २४३४

अस्मिन् पदे परमे तस्थिवांसम् अध्वस्मभिर्विश्वहा दीदिवांसम् ।
आपो नप्त्रे घृतमन्नं वहन्तीः स्वयमत्कैः परि दीयन्ति यह्वीः २४३५

अयांसमग्ने सुक्षितिं जनाय अयांसमु मघवद्भ्यः सुवृक्तिम् ।
विश्वं तद् भद्रं यदवन्ति देवा बृहद् वदेम विदथे सुवीराः २४३६

## १५ अग्नीन्द्रादयः ।

(ऋ० ७ । ४१ । १ । वसिष्ठो मैत्रावरुणिः । अग्नीन्द्रमित्रावरुणाश्विभगपूषब्रह्मणस्पतिसोमरुद्राः । जगती । )

प्रातरग्निं प्रातरिन्द्रं हवामहे प्रातर्मित्रावरुणा प्रातरश्विना ।
प्रातर्भगं पूषणं ब्रह्मणस्पतिं प्रातः सोममुत रुद्रं हुवेम २४३७

## १६ अग्निर्मरुतश्च ।

( ऋ० १ । १९ । १-९ । मेधातिथिः काण्वः । गायत्री । )

प्रति त्यं चारुमध्वरं　गोपीथाय प्र हूयसे　। मरुद्भिरग्न आ गहि　२४३८
नहि देवो न मर्त्यो　महस्तव क्रतुं परः　। मरुद्भिरग्न आ गहि　२४३९
ये महो रजसो विदुर्　विश्वे देवासो अद्रुहः । मरुद्भिरग्न आ गहि　२४४०
ये उग्रा अर्कमानृचुर्　अनाधृष्टास ओजसा　। मरुद्भिरग्न आ गहि　२४४१
ये शुभ्रा घोरवर्पसः　सुक्षत्रासो रिशादसः　। मरुद्भिरग्न आ गहि　२४४२
ये नाकस्याधि रोचने　दिवि देवास आसते । मरुद्भिरग्न आ गहि　२४४३
य ईङ्खयन्ति पर्वतान्　तिरः समुद्रमर्णवम्　। मरुद्भिरग्न आ गहि　२४४४
आ ये तन्वन्ति रश्मिभिस्　तिरः समुद्रमोजसा । मरुद्भिरग्न आ गहि　२४४५
अभि त्वा पूर्वपीतये　सृजामि सोम्यं मधु　। मरुद्भिरग्न आ गहि　२४४६

(ऋ० ८ । १०३ । १४ । सोभरिः काण्वः । अनुष्टुप् । )

अग्ने याहि मरुत्सखा　रुद्रेभिः सोमपीतये ।
सोभर्या उप सुष्टुतिं　मादयस्व स्वर्णरे　२४४७

## १७ अग्निमित्रावरुणादयः ।

( ऋ० १ । ३५ । १ । हिरण्यस्तूप आङ्गिरसः । अग्निर्मित्रावरुणौ रात्रिः सविता च । जगती । )

ह्वयाम्यग्निं प्रथमं स्वस्तये　ह्वयामि मित्रावरुणाविहावसे ।
ह्वयामि रात्रीं जगतो निवेशनीं　ह्वयामि देवं सवितारमूतये　२४४८

## १८ अग्निर्वरुणश्च ।

( ऋ० ४ । १ । २-५ । वामदेवो गोतमः । त्रिष्टुप्, २४४९ अति जगती, २४५० धृतिः । )

स भ्रातरं वरुणमग्न आ ववृत्स्व देवाँ　अच्छा सुमती यज्ञवनसं ज्येष्ठं यज्ञवनसम् ।
ऋतावानमादित्यं चर्षणीधृतं　राजानं चर्षणीधृतम्　२४४९

सखे सखायमभ्या ववृत्स्वाशुं न　चक्रं रथ्येव रंह्यास्मभ्यं दस्म रंह्या ।
अग्ने मृळीकं वरुणे सचा विदो　मरुत्सु विश्वभानुषु ।
तोकाय तुजे शुशुचान　शं कृध्यस्मभ्यं दस्म शं कृधि　२४५०

त्वं नो अग्ने वरुणस्य विद्वान् देवस्य हेळोऽव यासिसीष्ठाः ।
यजिष्ठो वह्नितमः शोशुचानो विश्वा द्वेषांसि प्र मुमुग्ध्यस्मत् २४५१
स त्वं नो अग्नेऽवमो भवोती नेदिष्ठो अस्या उषसो व्युष्टौ ।
अव यक्ष्व नो वरुणं रराणो वीहि मृळीकं सुहवो न एधि २४५२

## १९ अग्नाविष्णू ।

( अथर्व कां० ७ । २९ ( ३० ) । १-२ । मेधातिथिः । त्रिष्टुप् । )

अग्नाविष्णू महि तद्वां महित्वं पाथो घृतस्य गुह्यस्य नाम ।
दमेदमे सप्त रत्ना दधानौ प्रति वां जिह्वा घृतमा चरण्यात् २४५३
अग्नाविष्णू महि धाम प्रियं वां वीथो घृतस्य गुह्या जुषाणौ ।
दमेदमे सुष्टुत्या वावृधानौ प्रति वां जिह्वा घृतमुच्चरण्यात् २४५४

## २० अग्निसूर्यौ ।

( ऋ० ८ । ५६ । ( ८ ) ५ । वालखिल्यसूक्तम् । पृषध्रः काण्वः । पंक्तिः । )

अचेत्यग्निश्चिकितुर् हव्यवाट् स सुमद्रथः ।
अग्निः शुक्रेण शोचिषा बृहत्सूरो अरोचत दिवि सूर्यो अरोचत २४५५

## २१ (केशिनः)–अग्निः सूर्यो वायुश्च ।

( ऋ० १ । १६४ । ४४ दीर्घतमा औचथ्यः । त्रिष्टुप् । )

त्रयः केशिन ऋतुथा वि चक्षते संवत्सरे वपत एक एषाम् ।
विश्वमेको अभि चष्टे शचीभिर् ध्राजिरेकस्य ददृशे न रूपम् २४५६

## २२ अग्निसूर्यानिलाः ।

( ऋ० ८ । १८ । ९ इरिम्बिठिः काण्वः । उष्णिक् । )

शमग्निरग्निभिः करच् छं नस्तपतु सूर्यः । शं वातो वातु अरपा अप स्रिधः २४५७

## अग्निसूर्यवायवः।

( ऋ० १० । १३६ । १-७ ॥ २४५८ जूतिः, २४५९ वातजूतिः २४६० विप्रजूतिः, २४६१ वृषाणकः, २४६२ करिक्रतः २४६ एतशः, २४६४ ऋष्यशृङ्गः ( एते वातरशना मुनयः) । ( केशिनः=) अग्नि-सूर्य-वायवः । अनुष्टुप् । )

केश्यग्निं केशी विषं केशी बिभर्ति रोदसी ।
केशी विश्वं स्वर्दृशे केशीदं ज्योतिरुच्यते २४५८

मुनयो वातरशनाः पिशङ्गा वसते मला ।
वातस्यानु ध्राजिं यन्ति यद् देवासो अविक्षत २४५९

उन्मदिता मौनेयेन वाताँ आ तस्थिमा वयम् ।
शरीरेदस्माकं यूयं मर्तासो अभि पश्यथ २४६०

अन्तरिक्षेण पतति विश्वा रूपावचाकशत् ।
मुनिर्देवस्यदेवस्य सौकृत्याय सखा हितः २४६१

वातस्याश्वो वायोः सखा अथो देवेषितो मुनिः ।
उभौ समुद्रावा क्षेति यश्च पूर्व उतापरः २४६२

अप्सरसां गन्धर्वाणां मृगाणां चरणे चरन् ।
केशी केतस्य विद्वान् त्सखा स्वादुर्मदिन्तमः २४६३

वायुरस्मा उपामन्थत् पिनष्टि स्मा कुनन्नमा ।
केशी विषस्य पात्रेण यद् रुद्रेणापिबत् सह २४६४

## अग्नीषोमौ ।

( ऋ० १ । ९३ । १-१२ । गोतमो राहूगणः । २४६५-२४६७ अनुष्टुप्ः २४६८-२४७१, २४७६ त्रिष्टुप्ः २४७२ जगती त्रिष्टुब्वा; २४७३-२४७५ गायत्री । )

अग्नीषोमाविमं सु मे शृणुतं वृषणा हवम् । प्रति सूक्तानि हर्यतं भवतं दाशुषे मयः २४६५
अग्नीषोमा यो अद्य वाम् इदं वचः सपर्यति । तस्मै धत्तं सुवीर्यं गवां पोषं स्वश्व्यम् २४६६
अग्नीषोमा य आहुतिं यो वां दाशाद्धविष्कृतिम् । स प्रजया सुवीर्यं विश्वमायुर्व्यश्नवत् २४६७

अग्नीषोमा चेति तद् वीर्यं वां यदमुष्णीतमवसं पणिं गाः ।
अवातिरतं बृसयस्य शेषो ऽविन्दतं ज्योतिरेकं बहुभ्यः २४६८

युवमेतानि दिवि रोचनानि अग्निश्च सोम सक्रतू अधत्तम् ।
युवं सिन्धूँरभिशस्तेरवद्याद् अग्नीषोमावमुञ्चतं गृभीतान् २४६९
आन्यं दिवो मातरिश्वा जभार अमथ्नादन्यं परि श्येनो अद्रेः ।
अग्नीषोमा ब्रह्मणा वावृधाना उरुं यज्ञाय चक्रथुरु लोकम् २४७०
अग्नीषोमा हविषः प्रस्थितस्य वीतं हर्यतं वृषणा जुषेथाम् ।
सुशर्माणा स्ववसा हि भूतम् अथा धत्तं यजमानाय शं योः २४७१
यो अग्नीषोमा हविषा सपर्याद् देवद्रीचा मनसा यो घृतेन ।
तस्य व्रतं रक्षतं पातमंहसो विशे जनाय महि शर्म यच्छतम् २४७२
अग्नीषोमा सवेदसा सहूती वनतं गिरः । सं देवत्रा बभूवथुः २४७३
अग्नीषोमावनेन वां यो वां घृतेन दाशति । तस्मै दीदयतं बृहत् २४७४
अग्नीषोमाविमानि नो युवं हव्या जुजोषतम् । आ यातमुप नः सचा २४७५
अग्नीषोमा पिपृतमर्वतो न आ प्यायन्तामुस्रिया हव्यसूदः ।
अस्मे बलानि मघवत्सु धत्तं कृणुतं नो अध्वरं श्रुष्टिमन्तम् २४७६

( अथर्व० ६ । ५४ । १-३ । ब्रह्मा । अनुष्टुप् । )

इदं तद् युज उत्तरम् इन्द्रं शुम्भाम्यष्टये । अस्य क्षत्रं श्रियं महीं वृष्टिरिव वर्धया तृणम् २४७७
अस्मै क्षत्रमग्नीषोमौ अस्मै धारयतं रयिम् । इमं राष्ट्रस्याभीवर्गे कृणुतं युज उत्तरम् २४७८
सबन्धुश्चासबन्धुश्च यो अस्माँ अभिदासति । सर्वं तं रन्धयासि मे यजमानाय सुन्वते २४७९

( अथर्व० ६ । ५८ । ३ । अथर्वा ( यशस्कामः ) । अग्निः, इन्द्रः, सोमः । अनुष्टुप् । )

यशा इन्द्रो यशा अग्निर् यशाः सोमो अजायत ।
यशा विश्वस्य भूतस्य अहमस्मि यशस्तमः २४८०

( अथर्व० ६ । ९३ । ३ । शन्तातिः । अग्निषोमौ वरुणः मरुतः वातपर्जन्यौ । त्रिष्टुप् । )

त्रायध्वं नो अघविषाभ्यो वधाद् विश्वे देवा मरुतो विश्ववेदसः ।
अग्नीषोमा वरुणः पूतदक्षा वातापर्जन्ययोः सुमतौ स्याम २४८१

( अथर्व० ७ । ११४ ( ११९ ) । १-२ ॥ भार्गवः । अग्नीषोमौ । अनुष्टुप् । )

आ ते ददे वक्षणाभ्य आ तेऽहं हृदयाद् ददे ।
आ ते मुखस्य संकाशात् सर्वं ते वर्च आ ददे २४८२
प्रेतो यन्तु व्याध्यः प्रानुध्याः प्रो अशस्तयः ।
अग्नी रक्षस्विनीर्हन्तु सोमो हन्तु दुरस्यतीः २४८३

# अग्निदेवता-पुनरुक्त-मन्त्रभागाः ।

## ऋग्वेदस्य प्रथमं मण्डलम् ।

[२] १ । १ । २ ( मधुच्छन्दा वैश्वामित्र । अग्नि )
स देवाँ एह वक्षति ।
(७०५) ४ । ८ । २ ( वामदेवो गौतम । अग्नि )
स देवाँ एह वक्षति ।
[४] १ । १ । ४ ( मधुच्छन्दा वैश्वामित्र । अग्नि )
विश्वत परिभूरसि ।
(१८९२) १।९७ । ६ ( कुत्स आंगिरस । अग्नि )
विश्वतः परिभूरसि ।
[५] १ । १ । ५ ( मधुच्छन्दा वैश्वामित्र । अग्नि )
देवो देवेभिरागमत् ।
( ५१२ ) ३ । १० । ४ ( विश्वामित्रो गाथिन । अग्नि )
अग्निर्देवेभिरागमत् ।
[ ८ ] १ । १ । ८ ( मधुच्छन्दा वैश्वामित्र । अग्नि )
राजन्तमध्वराणां ।
( ३८ ) १ । २७ । १ (शुनः शेप आजीगर्ति । अग्नि )
सम्राजन्तमध्वराणाम् ।
( १०३ ) १ । ४५ । ४ ( प्रस्कण्व काण्व । अग्नि )
राजन्तमध्वराणाम् ।
८ । ८ । १८ ( सध्वंस काण्व । अश्विनौ )
राजन्तमध्वराणाम् ।
[ १० ] १ । १२ । १ ( मेधातिथि काण्व । अग्नि )
अग्निं दूतं वृणीमहे ।
(७०) १ । ३६ । ३ प्र त्वा दूतं वृणीमहे ।
(८८) १ । ४४ । ३ अद्या दूतं वृणीमहे ।
[१०] १ । १२ । १ ( मेधातिथि काण्व । अग्नि )
अग्निं दूतं वृणीमहे होतारं विश्ववेदसम् ।
अस्य यज्ञस्य सुक्रतुम् ।
( ७० ) १ । ३६ । ३ ( कण्वो घौर । अग्नि )
प्र त्वा दूतं वृणीमहे होतारं विश्ववेदसम् ।
( ९१ ) १ । ४४ । ७ ( प्रस्कण्व काण्व । अग्नि )
होतारं विश्ववेदसम् ।
(१२२६) ८ । १९ । ३ ( सोभरि काण्व । अग्नि )
यजिष्ठं त्वा ववृमहे देवं देवत्रा होतारममर्त्यम् ।
अस्य यज्ञस्य सुक्रतुम् ।

[ १२ । १ । १२ । ३ ( मेधातिथि काण्व । अग्नि )
अग्ने देवाँ इहा वह ।
( १९ ) १ । १२ । १० ( मेधातिथि काण्व । अग्नि )
अग्ने देवाँ इहा वह ।
( २२ ) १ । १५ । ४ ( मेधातिथि काण्व । अग्नि )
अग्ने देवाँ इहा वह ।
[ १३ ] १ । १२ । ४ ( मेधातिथि काण्व । अग्नि )
यदग्ने यासि दूत्यम् । देवैरा सत्सि बर्हिषि ।
( २२१ ) १ । ७४ । ७ ( गोतमो राहूगण । अग्नि )
यदग्ने यासि दूत्यम् ।
( ९२४ ) ५ । २६ । ५ ( वसूयव आत्रेया । अग्नि )
देवैरा सत्सि बर्हिषि ।
(१३५६) ८ । ४४ । १४ (विरूप आंगिरस । अग्नि )
देवैरा सत्सि बर्हिषि ।
[ १५ ] १ । १२ । ६ ( मेधातिथि काण्व । अग्नि )
कविर्गृहपतिर्युवा ।
(११७८) ७ । १५ । २ (वसिष्ठो मैत्रावरुणि । अग्नि )
कविर्गृहपतिर्युवा ।
(१४६३) ८ । १०२ । १ (प्रयोगो भार्गव — । अग्नि )
कविर्गृहपतिर्युवा ।
[ १६ ] १ । १२ । ७ कविमग्निमुप स्तुहि ।
१ । १३६ । ६ इन्द्रमग्निमुप स्तुहि ।
[ १६ ] १ । १२ । ७ सत्यधर्माणमध्वरं ।
५ । ५१ । २ सत्यधर्माणो अध्वरम् ।
[१८] १ । १२ । ९ ( मेधातिथि काण्व । अग्नि )
तस्मै पावक मृळय ।
(१३७०) ८ । ४४ । २८ (विरूप आंगिरस । अग्नि )
तस्मै पावक मृळय ।
[ १९ ] १ । १२ । १० ( मेधातिथि काण्व । अग्नि )
स नः पावक दीदिवः ।
(५१६) ३ । १० । ८ (विश्वामित्रो गाथिन । अग्नि )
स नः पावकः दीदिहि ।
[१९] १ । १२ । १०; (१२) १ । १२ । ३, (२२) १ । १५ । ४
अग्ने देवाँ इहा वह ।

[२०] १ । १२ । ११ ( मेधातिथि काण्व । अग्निः )
**स नः स्तवान आ भर।**
**...रयिं वीरवतीमिषम्।**
८ । २४ । ३ ( विश्वमना वैयश्व । इन्द्र )
**स नः स्तवान आ भर रयिं।**
९ । ४० । ५ ( बृहन्मतिराङ्गिरस । पवमान सोम )
**स नः पुनान आ भर रयिं स्तोत्रे सुवीर्यम्।**
९ । ६१ । ६ अमहीयुराङ्गिरस । पवमान सोम )
**स नः पुनान आ भर रयिं वीरवतीमिषम्।**
[२१] १ । १२ । १२ ( मेधातिथि काण्व । अग्नि )
**अग्ने शुक्रेण शोचिषा।**
**.. इमं स्तोमं जुषस्व न ।**
(१३५६) ८ ४४।१४ (विरूप आङ्गिरस । अग्नि )
**अग्ने शुक्रेण शोचिषा।**
(१५८८) १० । २१ । ८ (विमद ऐन्द्र । अग्नि )
**अग्ने शुक्रेण शोचिषोरु।**
(१३२५) ८।४३।१६ (विरूप आङ्गिरस । अग्नि )
**इमं स्तोमं जुषस्व मे ।**
[२२] १ । १५ । ४. (१२) १ । १२ । ३. (१९) १ । १२ । १०
**अग्ने देवाँ इहा वह ।**
[२८] १ । २६ । १; १ । १४ । ११, **सेमं नो अध्वरं यज।**
[३१] १ । २६ । ४ ( शुन शेप आजीगर्ति । अग्नि )
**वरुणो मित्रो अर्यमा । सीदन्तु मनुषो यथा।**
१ । ४१ । १ ( कण्वो घौर. । वरुणमित्रार्यमण. )
**वरुणो मित्रो अर्यमा ।**
४ । ५५ । १० ( वामदेवो गौतम । विश्वेदेवा )
**वरुणो मित्रो अर्यमा।**
५ । ६७ । ३ ( यजत आत्रेय. । मित्रावरुणौ )
**वरुणो मित्रो अर्यमा ।**
८ । १८ । ३ ( इरिम्बिठि काण्व । आदित्या )
**वरुणो मित्रो अर्यमा ।**
८ । २८ । २ ( मनुर्वैवस्वत । विश्वेदेवा )
**वरुणो मित्रो अर्यमा ।**
८ । ८३ । २ (कुसीदी काण्व । विश्वेदेवा )
**वरुणो मित्रो अर्यमा ।**
९ । ६४ । २९ (कश्यपो मारीच । पवमान सोम )
**सीदन्तो वनुषो यथा ।**
[ ३२ ] १ । २६ । ५ ( शुन शेप आजीगर्ति. । अग्निः )
**इमा उ षु श्रुधा गिरः।**

( १०४ ) १ । ४५ । ५ ( प्रस्कण्व काण्व । अग्नि )
**इमा उ षु श्रुधी गिरः।**
( ४३३ ) २ । ६ । १ ( सोमाहुतिर्भार्गव । अग्नि )
**इमा उ षु श्रुधी गिरः।**
[३७] १ । २६ । १० ( शुन शेप आजीगर्ति । अग्नि )
**इमं यज्ञमिदं वचः ।**
१ । ९१ । १० ( गोतमो राहूगण । सोम )
**इमं यज्ञमिदं वचो । जुजुषाण उपागहि ।**
(१६९९) १० । १५० । २ (मृळीको वासिष्ठ । अग्नि )
**इमं यज्ञमिदं वचो जुजुषाण उपागहि ।**
[ ३८ ] १ । २७ । १ (शुन शेप आजीगर्ति । अग्नि )
**सम्राजन्तमध्वराणाम् ।**
(८) १।१।८; (१०३) १ । ४५ । ४ **राजन्तमध्वराणां।**
८ । ८ । १८ **राजन्तावध्वराणां ।**
[ ५७ ] १ । ३१ । ८ ( हिरण्यस्तूप आङ्गिरस । अग्नि )
**यशसं कारुं कृणुहि स्तवानः ।**
**देवैर्द्यावापृथिवी प्रावतं नः।**
९ । ६९ । १० (हिरण्यस्तूप आङ्गिरस । पवमान सोम.)
**भरा चन्द्राणि गृणते वसूनि देवैर्द्यावापृथिवी प्रावतं नः।**
१० । ६७ । १२ ( अयास्य आङ्गिरस । बृहस्पति )
**देवैर्द्यावापृथिवी प्रावतं नः।**
[७०] १ । ३६ । ३ **प्र त्वा दूतं वृणीमहे,**
(१०) १ । १२ । १ **अग्निं दूतं वृणीमहे ।**
(८८) १ । ४४ । ३ **अद्या दूतं वृणीमहे ।**
[७०] १।३६।३; (१०) १ । १२ । १; (९२) १ । ४४ । ७
**होतारं विश्ववेदसं ।**
[७१] १ । ३६ । ४ **देवासस्त्वा वरुणो मित्रो अर्यमा ।**
१ । ४० । ५ **यस्मिन्निन्द्रो वरुणो मित्रो अर्यमा ।**
७ । ६६ । १२ **यदोहते वरुणो मित्रो अर्यमा ।**
७।८२।१०; ८३।१० **अस्मे इन्द्रो वरुणो मित्रो अर्यमा ।**
८ । १९ । १६ **येन चष्टे वरुणो मित्रो अर्यमा।**
८ । २६ । ११ **सजोषसा वरुणो मित्रो अर्यमा।**
१० । ३६ । १ **द्यावा क्षामा वरुणो मित्रो अर्यमा ।**
१० । ६५ । १ **अग्निरिन्द्रो वरुणो मित्रो अर्यमा ।**
१० । ६५ । ९ **इन्द्रवायू वरुणो मित्रो अर्यमा ।**
१० । ९२ । ६ **तेभिश्चष्टे वरुणो मित्रो अर्यमा ।**
[ ७२ ] १ । ३६ । ५ ( कण्वो घौर । अग्नि )
**अग्ने दूतो विशामसि ।**
( ९४ ) १ । ४४ । ९ ( प्रस्कण्व काण्व । अग्नि )
**अग्ने दूतो विशामसि।**

[७४] १ । ३६ । ७ ( कण्वो घौर । अग्नि )
**तं घेमित्था नमस्विन उप स्वराजमासते ।**
८ । ६९ । १७ ( प्रियमेध आङ्गिरस । इन्द्र )
**तं घेमित्था नमस्विन उप स्वराजमासते ।**
[७५] १ । ३६ । ८ ( कण्वो घौर । अग्नि )
**उरु क्षयाय चक्रिरे।**
७ । ६० । ११ ( वसिष्ठ । मित्रावरुणौ )
**उरु क्षयाय चक्रिरे सुधातु ।**
[७७] १ । ३६ । १० ( कण्वो घौर । अग्नि )
**यं त्वा देवासो मनवे दधुरिह यजिष्ठं हव्यवाहन ।**
( ९० ) १ । ४४ । ५ ( प्रस्कण्व काण्व । अग्नि )
**याजिष्ठं हव्यवाहन।**
(११८२) ७ । १५ । ६ ( वसिष्ठो मैत्रावरुणि । अग्नि )
**यजिष्ठो हव्यवाहनः।**
(१२४४) ८ । १९ । २१ ( सोभरि काण्वः । अग्नि )
**यजिष्ठं हव्यवाहनम् ।**
[७९] १ । ३६ । १२ **स नो मृळ महाँ असि।**
( ७१२ ) ४ । ९ । १ **अग्ने मृळ महाँ असि ।**
१ । ३६ । १४ ( कण्वो घौर । यूप )
कृधी न **उर्ध्वाञ्चरथाय जीवसे।**
१ । १७२ । ३ ( अगस्त्यो मैत्रावरुण । मरुतः )
**ऊर्ध्वान्नः कर्त जीवसे ।**
[८०] १ । ३६ । १५ ( कण्वो घौर । अग्नि )
**पाहि नो अग्ने रक्षस पाहि धूर्तेरराव्णः ।**
(१११२) ७ । १ । १३ ( वसिष्ठो मैत्रावरुणि । अग्नि )
**पाहि नो अग्ने रक्षसो** अजुष्टात्पाहि **धूर्तेरररुषो** अघायो
[८७] १ । ४४ । २ ( प्रस्कण्व काण्व । अग्नि )
**अग्ने रथीरध्वराणाम् ।**
(१२१५) ८ । ११ । २ ( वत्स काण्व । अग्नि )
**अग्ने रथीरध्वराणाम्।**
[८७] १ । ४४ । २; १ । ९ । ८; ८ । ६५ । ९
**अस्मे धेहि श्रवो बृहत् ।**
[८८] १ । ४४ । ३ **अद्या दूतं वृणीमहे ।**
(१०) १ । १२ । १ **अग्निं दूतं वृणीमहे ।**
(७०) १ । ३६ । ३ **प्र त्वा दूतं वृणीमहे ।**
[९०] १ । ४४ । ५, (७७) १ । ३६ । १०
**यजिष्ठं हव्यवाहन** । ७ । १५ । ६ **यजिष्ठो हव्यवाहनः** । ८ । १९ । २१ **यजिष्ठ हव्यवाहनं ।**
[९२] १ । ४४ । ७; (१०) १ । १२ । १;
(७०) १।३६। ३ **होतारं विश्ववेदसं ।**

[९४] १ । ४४ । ९, (७२) १ । ३६ । ५
**अग्ने दूतो विशामसि ।**
[९६] १ । ४४ । ११ ( प्रस्कण्व काण्व । अग्नि )
**नि त्वा यज्ञस्य साधनम् ।**
(५३८) ३ । २७ । २ ( विश्वामित्रो गाथिन । अग्नि )
गिरा **यज्ञस्य साधनम् ।**
८ । ६ । ३ ( वत्स काण्व । इन्द्र )
स्तोमैर्य**ज्ञस्य साधनम् ।**
(१२७८) ८ । २३ । ९ ( विश्वमना वैयश्व । अग्नि )
**यज्ञस्य साधनं** गिरा।
[९९] १ । ४४ । १४ ( प्रस्कण्व काण्व । अग्नि )
**अग्निजिह्वा ऋतावृधः ।**
**अश्विभ्यामुषसा सजूः ।**
७ । ६६ । १० ( वसिष्ठो मैत्रावरुणि । आदित्य )
**अग्निजिह्वा ऋतावृधः।**
१० । ६५ । ७ ( वसुकर्णो वासुक्र । विश्वेदेवा )
दिवक्षसो **अग्निजिह्वा ऋतावृधः ।**
५ । ५१ । ८ ( स्वस्त्यात्रेय । विश्वेदेवा )
**अश्विभ्यामुषसा सजूः ।**
[१०३] १ । ४५ । ४ ( प्रस्कण्व काण्व । अग्नि )
**प्रियमेधा अहूषत ।**
८।८।१८ ( सध्वंस काण्व । अश्विनौ )
**प्रियमेधा अहूषत ।**
८।८७।३ द्युम्नीको वा वासिष्ठ । अश्विनौ )
[१०३] १,४५,४; (८) १,१,८ **राजन्तमध्वराणाम् ।**
८,८,१८ **राजन्तावध्वराणाम् ।**
(३८) १,२७,१ **सम्राजन्तमध्वराणाम् ।**
[१०३] १,४५,४ **अग्निं शुक्रेण शोचिषा ।**
( २१ ) १,१२,१२ **अग्ने शुक्रेण शोचिषा।**
[१०४] १,४५,५; ( ३२ ) १,२६,५, २,६,१
**इमा उ षु श्रुधी गिरः ।**
[१०५] १,४५,६ ( प्रस्कण्व काण्व । अग्नि )
**अग्ने हव्याय वोळ्हवे ।**
(५६१) ३,२९,४ ( विश्वामित्रो गाथिन अग्नि )
**अग्ने हव्याय वोळ्हवे ।**
[१०६] १ । ४५ । ७ ( प्रस्कण्व काण्व । अग्नि )
**श्रुत्कर्णं सप्रथस्तमं ।**
(१६८९) १०,१४०,६ ( अग्नि पावक । अग्नि )
**श्रुत्कर्णं सप्रथस्तमं** त्वा गिरा ।

[१०७] १,४५,८, अग्ने **मर्ताय दाशुषे** १ ८४,७,९,९८,४ वसु **मर्ताय दाशुषे** । ८,१,२२ देवां **मर्ताय दाशुषे** ।

[१११] १,५८,२ (नोधा गौतम । अग्नि )

**दिवो न सानु स्तनयन्नचिक्रदत्** ।

९,८६,९ ( अकृष्टा माषा । पवमान सोम )

[११३] १,५८,४ ( नोधा गौतम । अग्नि )

**कृष्णं त एम रुशदूर्मे अजर** ।

(७०१) ४,७,९ ( वामदेवो गौतम । अग्नि )

**कृष्णं त एम रुशतः पुरो भाः** ।

( ११६ ) १ । ५८ । ७ ( नोधा गौतम । अग्नि )

**यं वाघतो वृणते अध्वरेषु** ।

**सपर्यामि प्रयसा यामि रत्नम्** ।

१०, ३०, ४ ( कवष ऐलूष । आप अपानपात् वा )

**यं विप्रास ईळते अध्वरेषु** ।

३,५४,२ ( प्रजापतिर्वैश्वामित्र प्रजापतिर्वाच्यो वा । विश्वेदेवा )

**सपर्यामि प्रयसा यामि रत्नम्** ।

[ ११७ ] १,५८,८ **अच्छिद्रा सूनो सहसो नो अद्य** ४,२,२ **इह त्वं सूनो०**-६,५०,९ **उत त्वं सूनो०**-।

[११८]१,५८,९,(१२३) १,६०,५, १,६१,१६;१,६२,१३, १,६४, १५, ८,८०, १०, ९, ९३, ५ **प्रातर्मक्षू धियावसुर्जगम्यात्** ।

[ १२२ ] १,६०,४ ( नोधा गौतम । अग्नि )

**अग्निर्भुवद्रयिपती रयीणाम्** ।

( १९५ ) १,७२,१ ( पराशर शाक्य अग्नि )

[ १४३ ] १ । ६६ । ९, १० ( पराशर शाक्त्य । अग्नि )

**एनोन्नवन्त गावः स्व १ र्दृशीके** ।

(१७३) १, ६९,९, १० ( पराशर शाक्त्य । अग्नि )

**नवन्त विश्वे स्व १ र्दृशीके** ।

[ १६२ ] १, ६८, ९, १०, **पितुर्न पुत्राः क्रतुं जुषन्त** ।

९, ९७, ३०, **पितुर्न पुत्रः क्रतुभिर्यता न** ।

[ १७० ] १, ६९, ७ **नकिष्ट एता व्रता मिनन्ति** ।

१०, १०,५ **नकिरस्य प्र मिनन्ति व्रतानि** ।

[ १७३ ] १, ६९, ९, १० ; ( १४३ ) १, ६६, ९, १०

[ १७८ ] १, ७०, ५, ६, ( पराशर शाक्त्य । अग्नि )

**स हि क्षपावाँ अग्नी रयीणां** ।

( ११६५ ) ७, १०, ५ (वसिष्ठो मैत्रावरुणि । अग्नि )

**स हि क्षपावाँ अभवद्रयीणाम्** ।

[१८८] १, ७१, ४ ( पराशर शाक्त्य । अग्नि )

**मथीद्यदीं विभृतो मातरिश्वा** ।

(३४८) १, १४८, १ ( दीर्घतमा औचथ्य । अग्नि. )

**मथीद्यदीं विष्टो मातरिश्वा** ।

[१९३] १,७१,९ ( पराशर शाक्त्यः । अग्नि. )

**राजानामित्रावरुणा सुपाणी** ।

३, ५६, ७ ( प्रजापतिर्वैश्वामित्र प्रजापतिर्वाच्यो वा । विश्वेदेवा )

[१९४] १, ७१, १० ( पराशर शाक्त्य । अग्नि )

**प्र मर्षिष्ठा अभि विदुष्कवि सन्** ।

७, १८, २ ( वसिष्ठो मैत्रावरुणि । इन्द्रः )

**एवाव द्युभिरभि०— ।**

[१९५] १, ७२, १ ( पराशर शाक्त्य । अग्नि )

**हस्ते दधानो नर्या पुरूणि** ।

७, ४५, १ ( वसिष्ठो मैत्रावरुणि । सविता )

[१९५] १,७२,१; ( १२२ ) १,६०,४ **अग्निर्भुवद्रयिपती रयीणां** ।

[१९७] १,७२,३ ( पराशर शाक्त्य । अग्नि )

**नामानि चिद्दधिरे यज्ञियानि** ।

( ९४२ ) ६,१,४ ( भरद्वाजो बार्हस्पत्य । अग्नि )

[ १९८ ] १,७२,४ **अग्निं पदे परमे तस्थिवांसम्** ।

२,३५,१४ **अस्मिन् पदे०— ।**

[ १९९ ] १,७२,५ ( पराशर शाक्त्य । अग्नि )

**रिरिक्वांसस्तन्वः कृण्वत स्वाः** ।

४,२४,३ ( वामदेवो गौतम । इन्द्र )

**रिरिक्वांसस्तन्वः कृण्वत त्राम** ।

[ २०३ ] १,७२,९ ( पराशर शाक्त्य । अग्नि )

**कृण्वानासो अमृतत्वाय गातुम्** ।

३,३१,९ (कुशिक ऐषीरथि विश्वामित्रो गाथिनो वा । इन्द्र )

[ २०६ ] १,७३,२ ( पराशर शाक्त्य । अग्नि )

**देवो न यः सविता सत्यमन्मा** ।

९,९७,४८ ( कुत्स आङ्गिरसः । पवमान सोमः )

[ २०७ ] १,७३,३ ( पराशर शाक्त्य । अग्नि )

**देवो न यः पृथिवीं विश्वधाया उपक्षेति हितमित्रो न राजा** ।

**पुरः सदः शर्मसदो न वीरा** ।

३, ५५, २१ ( प्रजापतिर्वैश्वामित्रः प्रजापतिर्वाच्यो वा । विश्वेदेवा )

**इमां च नः पृथिवीं विश्वधाया उप क्षेति०—।**

[२११] १,७३,८ ( पराशर शाक्त्य. । अग्नि· )

**आपप्रिवान्रोदसी अन्तरिक्षम्** ।

१०,१३९,२ ( विश्वावसुर्देवगन्धर्व । सविता )
[२१४] १,७३,१० ( पराशर शाक्त्य । अग्नि )
**एता ते अग्न उचथानि वेधो जुष्टानि सन्तु।**
(६६६) ४,२,२० ( वामदेवो गौतम । अग्नि )
**एता ते अग्न उचथानि वेधोऽ**वोचाम कवये **ता जुषस्व।**
उच्छोचस्व कृणुहि वस्यसो नो महो **रायः** पुरुवार प्र यन्धि।
[२१७] १,७४,३ ( गोतमो राहूगण । अग्नि )
अग्निर्**वृत्रहा**जनि।
**धनंजयो रणेरणे।**
**(१०५६)** ६,१६,१५ ( भरद्वाजो बार्हस्पत्य । अग्निः )
**दस्युहन्तमम्।**
**धनंजयं रणेरणे।**
[२२१] १.७४,७;(१३) १,१२,४ **यदग्ने यासि दूत्यम्।**
[२२७] १,७५,४ ( गोतमो राहूगण । अग्नि )
**सखा सखिभ्य ईड्यः।**
९ ६६,१ ( शतं वैखानसा । पवमान सोम )
[२३२] १,७६,४ ( गोतमो राहूगण । अग्नि )
**वेषि होत्रमुत पोत्रं यजत्र।**
**(१४९३)** १०,२,२ ( त्रित आप्त्य । अग्नि )
**— पोत्रं जनानां।**
[२३४] १, ७७, १ (गोतमो राहूगण । अग्नि )
**यो मर्त्येष्वमृत ऋतावा होता यजिष्ठ।**
(६४७) ४, २, १ (वामदेवो गौतम । अग्नि )
**—० ऋतावा । होता यजिष्ठो।**
[२३७] १, ७७, ४ **वाजप्रसूता इषयन्त मन्म।**
७, ८७, ३ **प्रचेतसो य इषयन्त मन्म।**
[ २३९ ] १, ७८, १ (गोतमो राहूगण । अग्नि )
**अभि त्वा गोतमा गिरा जातवेदो विचर्षणे।**
**द्युम्नैरभि प्र णोनुमः।**
४,३२, ९ ( वामदेवो गौतम. । इन्द्र )
**अभि त्वा गोतमा गिरानूषत।**
(१०७०) ६, १६, २९ (भरद्वाजो बार्हस्पत्य । अग्नि )
**आ भर जातवेदो विचर्षणे।**
(१०७७) ६. १६, ३६ (भरद्वाजो बार्हस्पत्य । अग्नि )
**आ भर जातवेदो विचर्षणे।**
**(१३११)** ८, ४३, २ ( विरूप आङ्गिरस । अग्नि )
**जातवेदो विचर्षणे।**
[ २३९ - २४३ ] १. ७८. १–५ **द्युम्नैरभि प्र णोनुमः।**
[ २४६ ] १, ७९, ३ ( गोतमो राहूगण । अग्निः)
**अर्यमा मित्रो वरुणः परिज्मा।**

८, २७, १७ ( मनुर्वैवस्वत । विश्वेदेवा )
**—वरुणः सरातयो।**
१०, ९३, ४ ( तान्व पार्थ्य । विश्वेदेवा )
[ २४७ ] १, ७९, ४ ( गोतमो राहूगण । अग्नि )
**ईशानः सहसो यहो।**
(११८७) ७, १५, ११ ( वसिष्ठो मैत्रावरुणि । अग्नि )
[ २४८ ] १,७९,५ ( गोतमो राहूगण । अग्नि )
**अग्निरीळेन्यो गिरा।**
(१८५५)१०,११८,३(उरुक्षय आमहीयव । रक्षोहाऽग्नि )
[ २५१ ] १,७९,८ ( गोतमो राहूगण । अग्नि )
**सत्रासाहं वरेण्यम्।**
३,३४,८ ( विश्वामित्रो गाथिन । इन्द्र )
**—वरेण्यं सहोदां।**
[ २५२ ] १,७९,९ ( गोतमो राहूगण । अग्नि )
**रयिं विश्वायुपोषसम्।**
६,५९,९ ( भरद्वाजो बार्हस्पत्य । इन्द्राग्नी )
[ २५५ ] १, ७९, १२ ( गोतमो राहूगण । अग्नि )
**अग्नी रक्षांसि सेधति।**
(११८६) ७, १५, १० ( वसिष्ठो मैत्रावरुणि । अग्नि )
[ २५६–२६९ ] १, ९४, १–१४ **अग्ने सख्ये मा रिषामा वयं तव।**
[ २५८ ] १, ९४, ३ ( कुत्स आङ्गिरस । अग्नि )
**त्वे देवा हविरदन्त्याहुतम्।**
**(३८१)** २,१,१३ (गृत्समद शौनको भार्गव (आङ्गिरस शौनहोत्रो ) । अग्नि )
[ २६८ ] १, ९४, १३ **शर्मन्त्स्याम तव सप्रथस्तमे।**
५, ६५, ५ **स्याम सप्रथस्तमे।**
[ २७१ ] १, ९४, १६, **(१८७८ ) ९५, ११, (१८७८)**
**९६, ९; (१७२६) ९८, ३, १००, १९, १०२,**
**११; १०३, ८; १०५, १९, १०६, ७, १०७,**
**३, १०८, १३; १०९ ८; ११०, ९, १११, ५;**
**११२, २५; ११३, २०; ११४, ११, ११५, ६;**
**९, ९७,५८; तन्नो मित्रो वरुणो मामह-**
**न्तामदितिः सिन्धुः पृथिवी उत द्यौः।**
[ १८७२ ] ( औषसोऽग्नि प्रकरणं ) । ऋ १।९५।१-११
१, ९५, ५**जिह्मानामूर्ध्वः स्वयशा उपस्थे।**
२, ३५, ९ **जिह्मानामूर्ध्वो विद्युतं वसानः।**
[१८७५] १,९५,८ ( कुत्स आङ्गिरसः । अग्नि औषसोऽग्निर्वा )
**त्वेषं रूपं कृणुत उत्तरं यत् गोभिरद्भिः। धीः।**

९.७१,८ ( ऋषभो वैश्वामित्र । पवमान सोम. )
त्वेषं रूपं कृणुते वर्णो अस्य सुष्टुती गोअग्रया।
( ऋ१, ९६, १—९ द्रविणोदा अग्निः प्रकरण । )
[ १८७८ ] १.९५.११; १.९६.९ ( कुत्स आङ्गिरस । अग्नि. )
एवा नो अग्ने समिधा वृधानो
रेवत्पावक श्रवसे वि भाहि ।
तन्नो मित्रो वरुणो मामहन्तामदिति
सिन्धु पृथिवी उत द्यौः ।
[ १८७९-१८८६ ] १, ९६, १-७ देवा अग्निं
धारयन्द्रविणोदाम् ।
[ १८८४ ] १.९६.६ ( कुत्स आङ्गिरस । अग्नि
द्रविणोदा अग्निर्वा )
रायो बुध्नः संगमनो वसूनां ।
१०,१३९,३ विश्वावसुर्देव गन्धर्वः । सविता )
[ १८८६ ] १।९६ । ८ द्रविणोदा द्रविणसस्तुरस्य ।
१,१५,७ द्रविणोदा द्रविणसो ।
[ १८७८ ] १.९६.९ ( १८७८ ) १. ९५, ११
( शुचिरग्नि प्रकरणं ऋ १, ९७, १-८)
( १८८७-१८९४ ) १,९७, १, १-८,
अप नः शोशुचदघम् ।
[१८८९] १, ९७, ३ प्रास्माकासश्च सूरयः ।
( ८४० ) ५, १०, ६ अस्माकासश्च सूरयो ।
[ १८९२ ] १, ९७, ६ , ( ४ ) १, १, ४
विश्वतः परिभूरसि ।
[ १७२५ ] १, ९८. २ ( कुत्स आङ्गिरस । अग्नि ,
वैश्वानरोऽग्निर्वा )
पृष्टो दिवि पृष्टो अग्निः पृथिव्यां । स नो दिवा
स रिषः पातु नक्तम् ।
( १७९५ ) ७, ५, २ (वसिष्ठो मैत्रावरुणि । वैश्वानरोऽग्नि )
पृष्टो दिवि धाय्यग्निःपृथिव्यां ।
( १८९८) १०, ८७, १ (पायुर्भारद्वाज । रक्षोहाग्नि )
स नो दिवा ।
( जातवेदा अग्नि प्रकरण )
[ १८९२ ] १, ९९, १ स न पर्षदति दुर्गाणि विश्वा ।
( ३६२ ) १, १८९, २, १०. ५६. ७
स्वस्तिभिरति दुर्गाणि विश्वा ।
[ २७२ ] १, १२७, १ वसुं सूनुं सहसो जातवेदसं ।
( १४१९ ) ८. ७१. ११ अग्निं सूनुं०-
[ २७३ ] १,१२७,२ (परुच्छेपो दैवोदासिः। अग्निः) हुवेम
विप्रेभिः शुक्र मन्मभि । होतारं चर्षणीनाम् ।

( १३९१ ) ८ । ६०, ३ ( भर्गः प्रागाथः । अग्निः )
विप्रेभिः शुक्र मन्मभिः
१२७६) ८, २३, ७ ( विश्वमना वैयश्वः । अग्निः )
अग्निं वः हुवे होतारं चर्षणीनाम् ।
( १४०५ ) ८, ६०, १७ ( भर्ग· प्रागाथः । अग्निः)
अग्निमग्निं वो हुवेम । होतारं चर्षणीनाम् ।
[ २७९ ] १, १२७; ८ ( परुच्छेपो दैवोदासि । अग्निः )
अतिथिं मानुषाणां ।
( १२९४ ) ८ २३, २५ ( विश्वमना वैयश्व । अग्नि )
[ २८० ] १, १२७, ९ (परुच्छेपो दैवोदासिः । अग्नि )
शुष्मिन्तमो हि ते मदो द्युम्निन्तम उत क्रतुः ।
१, १७५, ५ (अगस्त्यो मैत्रावरुण । इन्द्र )
[ २८१ ] १, १२७, १० ( परुच्छेपो दैवोदासि । अग्नि )
विश्वासु क्षासु जोगुवे ।
५, ६४, २ ( अर्चनाना आत्रेय । मित्रावरुणौ )
[ २८४ ] १, १२८, २ ( परुच्छेपो दैवोदासि । अग्नि )
ऋतस्य पथा नमसा हविष्मता ।
( १९९३ ) १०, ७०, २ ( सुमित्रो वाध्र्यश्व ।
आप्रीसूक्तं=नराशंस )
ऋतस्य नमसा मियेधो ।
१०, ३१, २ ( कवष ऐलूषः । विश्वे देवाः )
पथा नमसा विवासेत् ।
[ २८८ ] १,१२८,६ ( परुच्छेपो दैवोदासि । अग्नि )
अरतिः . ।
... देवत्रा हव्यमोहिषे ।
अग्निर्द्वारा व्यृण्वति ।
(१२२४) ८,१९,१ ( सोभरिः काण्व । अग्नि )
अरतिं० देवत्रा हव्यमोहिरे ।
(१३०५ ) ८,३९,६ ( नाभाक काण्व । अग्नि )
अग्निर्द्वारा व्यूर्णुते ।
[ २९० ] १,१२८,८ ( परुच्छेपो दैवोदासिः । अग्नि· )
अग्निं होतारमीळते वसुधितिं प्रियं चेतिष्ठमरतिं
न्येरिरे
( ७६१ ) ५,१,७ ( बुधगविष्ठिरावात्रेयौ । अग्निः )
अग्निं होतारमीळते नमोभिः ।
( १०१९ ) ६,१४.२ ( भरद्वाजो बार्हस्पत्यः । अग्निः)
अग्निं होतारमीळते
( ११९२ ) ७,१६.१ ( वसिष्ठो मैत्रावरुणिः । प्रगाथ· )
प्रियं चेतिष्ठमरतिं स्वध्वरं ।

[३०१] १,१४०,१० ( दीर्घतमा औचथ्यः। अग्नि )
अस्माकमग्ने मघवत्सु दीदिहि।
( १७८५ ) ६,८,६ ( भरद्वाजो बार्हस्पत्यः। वैश्वानरोऽग्नि )
—धारयानामि।
[३१३] १,१४१,९ अराम्न नेमिः परिभूरजायथा ।
१,३२,१५— परि ता बभूव।
[३१९] १,१४३,२ ( दीर्घतमा औचथ्य। अग्नि )
स जायमानः परमे व्योमन्याविरग्निः।
( १७८१ ) ६,८,२ ( भरद्वाजो बार्हस्पत्यः। वैश्वानरोऽग्नि )
— व्योमनि व्रतान्यग्निः।
( १८०० ) ७,५,७ ( वसिष्ठो मैत्रावरुणि । वैश्वानरोऽग्नि )
—व्योमन्।
ऋतपत्याय जातवेदो ।
[३२५] १, १४३, ८ अदब्धेभिरदृपितेभिरिष्टेऽनिमिषद्भिः परि पाहि नो जाः।
(१७८६) ६, ८, ७ अदब्धेभिस्तव गोपाभिरिष्टेऽस्माकं पाहि त्रिषधस्थ सूरीन्।
[३२९] १, १४४, ४ समाने योना मिथुना समोकसा।
१, १५९, ४ जामी सयोनी--।
[३३०] १, १४४, ५ ( दीर्घतमा औचथ्य । अग्नि )
देवं मर्तास ऊतये हवामहे।
(५००) ३, ९, १ ( विश्वामित्रो गाथिनः। अग्नि. )
देवं मर्तास ऊतये।
(९०१) ५, २२, ३ ( विश्वसामा आत्रेयः। अग्निः)
— ऊतये।
(१२१९) ८, ११, ६ ( वत्स काण्व । अग्नि )
—ऊतये। अग्निं गीर्भिर्हवामहे।
[३३२] १, १४४, ७ ( दीर्घतमा औचथ्य । अग्निः)
मन्द्र स्वधाव ऋतजात सुक्रतो ।
रण्वः संदृष्टौ पितुमाँइव क्षयः।
(१४४८) ८, ७४, ७ (गोपवन आत्रेय.। अग्निः)
मन्द्र सुजात सुक्रतो।
१०, ६४, ११ ( गयः प्लात। विश्वेदेवाः )
— क्षयो।
[३४०] १, १४६, ३ समानं वत्समभि संचरन्ती।
३, ३३, ३; १०, १७, ११ समानं योनिमनु संचरन्ती ( १०, १७, ११, संचरन्तम् )।
[३४३] १, १४७, १ ( दीर्घतमा औचथ्यः। अग्निः )
ऋतस्य सामन्रणयन्त देवाः।

( ६९९ ) ४, ७, ७ ( वामदेवो गौतमः। अग्नि. )
—धामन्रणयन्त—।
[३४५] १, १४७, ३ ( दीर्घतमा औचथ्य. । अग्नि )
( १८२५ ) ४, ४, १३ ( वामदेवो गोतम । रक्षोहाऽग्नि.)
ये पायवो मामतेयं ते अग्ने पश्यन्तो अन्धं दुरितादरक्षन्। — ररक्ष तान्सुकृतो विश्ववेदा दिप्सन्त इद्रिपवो नाह देभुः।
[३४८] १,१४८,१ मथीद्यदी विष्टो मातरिश्वा।
( १८८ ) १,७१,४ — विभृतो-।
[३५१] १,१४८,४ ( दीर्घतमा औचथ्य । अग्नि )
आदस्य वातो अनु वाति शोचिः।
( ११२५ ) ७,३,२ ( वसिष्ठो मैत्रावरुणि. । अग्नि. )
[३५३] १,१४९,१ ( दीर्घतमा औचथ्यः। अग्नि )
महः स राय एषते पतिर्दन्।
१०,९३,६ ( तान्व पार्थ्य. । विश्वेदेवा )
—एषते।
[३६१] १,१८९,१ ( अगस्त्यो मैत्रावरुण । अग्नि )
विश्वानि देव वयुनानि विद्वान्।
(४७५) ३,५,६( विश्वामित्रो गाथिन. । अग्नि )
—देवो—।
[३६२] १,१८९,२ ( अगस्त्यो मैत्रावरुणः। अग्नि )
स्वस्तिभिरति दुर्गाणि विश्वा।
१०,५६,७ ( बृहदुक्थो वामदेव्य. । विश्वेदेवा )
[२४३८-४६] १, १९, १-९ मरुद्भिरग्न आ गहि।
[२४४०] १, १९, ३ (मेधातिथि काण्व । अग्निर्मरुतश्च)
विश्वे देवासो अद्रुहः।
९, १०२, ५ ( त्रित आप्त्य । पवमानः सोम )
[२४४६] १, १९, ९ (मेधातिथि काण्व । अग्निर्मरुतश्च)
अभि त्वा पूर्वपीतये।
८, ३, ७ (मेधातिथि काण्व । इन्द्रः)
[२४६६] १, ९३, २ ( गोतमो राहूगण । अग्नीषोमौ )
गवां पोषं स्वश्व्यम्।
९, ६५, १७ ( भृगुर्वारुणिर्जमदग्निर्भार्गवो वा। पवमान. सोम )
[२४६७] १, ९३, ३ ( गोतमो राहूगण । अग्नीषोमौ )
विश्वमायुर्व्यश्नवत्।
८, ३१, ८ ( मनुर्वैवस्वतः। दम्पती )
विश्वमायुर्व्यश्नुतः।
१०. ८५, ४२ ( सूर्या सावित्री ऋषिका । सूर्या सावित्री )
विश्वमायुर्व्यश्नुतम्।

[ २४६८ ] १, ९३, ४ अग्नीषोमा चेति तद्वीर्यं ।
३, १२, ९ तद्वां चेति प्र वीर्यम् ।
[ २४७० ] १, ९३, ६ ( गोतमो राहूगण । अग्नीषोमौ )
यज्ञाय चक्रथुरु लोकम् ।

७, ९९, ४ ( वसिष्ठो मैत्रावरुणि । इन्द्राविष्णू )
[ २४७२ ] १, ९३, ८ ( गोतमो राहूगण. । अग्नीषोमौ )
विशे जनाय महि शर्म यच्छतम् ।
७, ८२, १ ( वसिष्ठो मैत्रावरुणि. । इन्द्रावरुणौ )

# ऋग्वेदस्य द्वितीयं मण्डलम् ।

[ ३७० ] २, १, २ ( गृत्समद शौनको भार्गव [ आङ्गिरस शौनहोत्र ] । अग्नि )
( १६६० ) १०, ९१, १० ( अरुणो वैतहव्य । अग्नि )
तवाग्ने होत्रं तव पोत्रमृत्वियं तव नेष्ट्रं त्वमग्निदृतायतः ।
तव प्रशास्त्रं त्वमध्वरीयसि ब्रह्मा चासि गृहपतिश्च नो दमे ।

[ ३८१ ] २, १, १३ ( २५८ ) १ ९४ ३
त्वे देवा हविरदन्त्याहुतम् ।
[ ३८४ ] २, १, १६ ( गृत्समद शौनको भार्गव [ आङ्गिरस शौनहोत्र ] । अग्नि )=
( ३८४ ) २, २, १३, ( गृत्समद शौनक । अग्नि )
ये स्तोतृभ्यो गो अग्रामश्वपेशसमग्ने रातिमुपसृजन्ति सूरयः ।
अस्माञ्च तांश्च प्र हि नेषि वस्य आ बृहद्वदेम विदथे सुवीराः ।

( ३८४ ) २, १, १६, २, १३, ११, २१; १३, १३; १४, १२ १५, १०; १६, ९, १७, ९, १८, ९ २०, ९ २३, १९ २४, १६ २७, १७; २८, ११, २९, ७; ३३, १५; ३५, १५; ३९, ८, ४०, ६, ४२, ३, ९, ८६, ४८, बृहद्वदेम विदथे सुवीराः ।

[ ३८६ ] २, २, २ ( गृत्समद शौनक । अग्नि )
अभि त्वा नक्तीरुषसो ववाशिरेऽग्ने वत्सं न स्वसरेषु धेनवः ।
८, ८८, १ ( नोधा गोतम । इन्द्र )
अभि वत्सं न स्वसरेषु धेनवः ।
[ ३८८ ] २, २, ४ पाथो न पायुं जनसी उभे अनु ।
९, ७०, ३ अदाभ्यासो जनुषी उभे अनु ।

[ ३९२ ] २, २, ८ ( गृत्समद शौनक । अग्नि )
होत्राभिरग्निर्मनुषः स्वध्वरः ।
( १५४४ ) १०, ११, ५ ( हविर्धान आङ्गि । अग्नि )
होत्राभिरग्ने मनुषः स्वध्वरः ।

[ ४१७ ] २, ४, २ ( सोमाहुतिर्भार्गव । अग्नि )
इमं विधन्तो अपां सधस्थे द्वितादधुर्भृगवो विक्ष्वा३यो ।
( १६०२ ) १०, ४६, २ ( वत्सप्रिर्भालन्दन. । अग्नि. )
—सधस्थे ।
इच्छन्तो धीरा भृगवोऽविन्दन् ।
[ ४२८ ] २, ५, ४ ( सोमाहुतिर्भार्गव । अग्नि. )
वया इवानु रोहते ।
८, १३, ६ ( नारद काण्व. । इन्द्र )
—जुषन्त यत् ।
[ ४३२ ] २, ५, ८ ( सोमाहुतिर्भार्गव । अग्नि )
अयमग्ने त्वे अपि ।
( १३७० ) ८, ४४, २८ ( विरूप आङ्गिरस । अग्नि )
[ ४३३ ] २, ६, १ ( ३२ ) १, २६, ५; ( १०४ ) १, ४५, ५
इमा उ षु श्रुधी गिरः ।
[ ४३७ ] २, ६, ५ ( सोमाहुतिर्भार्गव । अग्नि )
स नो वृष्टिं दिवस्परि ।
९, ६५, २४ ( भृगुर्वारुणिर्जमदग्निर्भार्गवो वा । पवमान सोम )
ते नो — ।
[ ४४३ ] २, ७, ३ अति गाहेमहि द्विषः ।
( ५३९ ) ३, २७, ३ अति द्वेषांसि तरेम ।
[ ४४४ ] २, ७, ४ ( सोमाहुतिर्भार्गव । अग्नि )
शुचिः पावक वन्द्यो ।
( ११८६ ) ७, १५, १० ( वसिष्ठो मैत्रावरुणिः । अग्नि )
—ईड्यः ।
[ ४०१ ] २, ८, ५ अग्निमुक्थानि वावृधुः ।
८, ६, ३५; ८, ९५, ६ इन्द्रमुक्थानि वावृधुः ।
[ ४०१ ] २, ८, ५ ( गृत्समद शौनक । अग्नि )
विश्वा अधि श्रियो दधे ।
( १५८३ ) १०, २१, ३ ( विमद ऐन्द्र प्राजापत्यो वा वसुकृद्वा वासुक । अग्नि )
—श्रियो धिषे विवक्षसे ।

१०, १२७, १ ( कुशिक सौभर रात्रिर्वा भारद्वाजी। रात्रि )
—श्रियो ऽधित।
[ ४०२ ] २, ८, ६ ( गृत्समद शौनक । अग्नि )
अरिष्यन्त सचेमह्यभि ष्याम पृतन्यत।
८, २५, ११ ( विश्वमना वैयश्व । विश्वेदेवा )
अरिष्यन्तो नि पायुभि सचेमहि।

९, ३५, ३ ( प्रभूवसुराङ्गिरस । पवमान सोम )
अभि ष्याम पृतन्यतः।
( ९२० ) ५, २६, १, ( १०४३ ) ६, १६, २,
( १४७८ ) ८, १०२, १६.
आ देवान्वक्षि यक्षि च
२ ३६, ४, ( गृत्समद शौनक । अग्नि शुचिश्च )
आ वक्षि देवाँ इह विप्र यक्षि च।

# ऋग्वेदस्य तृतीयं मण्डलम्।

[ ४५१ ] ३,१,५, क्रतुं पुनानः कविभिः पवित्रैः।
३,३१,१६ मध्वः पुनाना —।
[ ४५९ ] ३ १,१३, १,१६४,५२
अपां गर्भं दर्शतमोषधीनां।
[ ४६१ ] ३,१,१५ ( विश्वामित्रो गाथिन । अग्नि )
रक्षा च नो दम्येभिरनीकैः।
३,५४,१ ( प्रजापतिर्वैश्वामित्र, प्रजापतिर्वाच्यो वा। विश्वेदेवा ) शृणोतु नो —।
[ ४६५ ] ३,१,१९ ( विश्वामित्रो गाथिन । अग्नि )
आ नो गहि सख्येभिः शिवेभिर्महान महीभिरूतिभिः सरण्यन्।
३,३१,१८ ( कुशिक ऐषीरथि विश्वामित्रो गाथिनो वा। इन्द्र )
४,३२,१ ( वामदेवो गौतम । इन्द्र )
आ तू न इन्द्र वृत्रहन्नस्माकमर्धमा गहि। महान्महीभिरूतिभि।
[ ४६६ ] ३,१,२० ( विश्वामित्रो गाथिन । अग्निः )
महान्ति वृष्णे सवना कृतेमा जन्मञ्जन्मन् निहितो जातवेदाः।
३, ३०, २ ( विश्वामित्रो गाथिन । इन्द्र )
स्थिराय वृष्णे सवना कृतेमा।
( ४६६ ) ३, १, २१, ( ४६७ ) ३, १, २० जन्मञ्जन्मन् निहितो जातवेदाः।
[ ४६७ ] ३, १, २१ ( विश्वामित्रो गाथिन । अग्नि )
तस्य वयं सुमतौ यज्ञियस्यापि भद्रे सौमनसे स्याम।
३, ५९, ४ ( विश्वामित्रो गाथिन । मित्र )
६, ४७, १३ ( गर्गो भारद्वाज । इन्द्र )
१०, १३१, ७ ( सुकीर्ति काक्षीवत । इन्द्र )
१०, १४, ६ ( यमो वैवस्वत । अङ्गिर पितृअथर्वभृगवसोम। लिङ्गोक्तदेवता पितरो वा )
तेषां वयं सुमतौ यज्ञियानामपि —
[ ४६८ ] ३ १ २२ ( विश्वामित्रो गाथिन । अग्नि )
अग्ने महि द्रविणमा यजस्व।
( १६५० ) १० ८० ७ ( अग्नि सौचीको वैश्वानरो वा सप्तिर्वाजंभरो वा। अग्नि )
[ ४६९ ] ३, १, २३ = ३,५,११ = ३,६,११ = ३,७,११ ( विश्वामित्रो गाथिन । अग्नि ) ३,१५,७ ( उत्कील कात्य । अग्नि ) = ३,२२,५ ( गाथी कौशिक । अग्नि ) = ३,२३,५ ( देवश्रवा देववातश्च भारतौ। अग्नि )
इळामग्ने पुरुदंसं सनिं गोः शश्वत्तमं हवमानाय साध।
स्यान्नः सूनुस्तनयो विजावाग्ने सा ते सुमतिर्भूत्वस्मे।
[ ४७३ ] ३,५,४, मित्रो अग्निर्भवति यत्समिद्धो।
( ७७९ ) ५, ३, १ त्वं मित्रो भवसि यत्समिद्धः।
[ ४७३ ] ३ ५ ४, ( विश्वामित्रो गाथिन । अग्नि )
मित्रो होता वरुणो जातवेदाः।
१०,८३,२ ( मन्युस्तापस । मन्यु )
मन्युर्होता—।
[ ४७४ ] ३,५,५, ( विश्वामित्रो गाथिन । अग्नि )
पाति प्रियं रिपो अग्रं पदं वेः।
( १७६५ ) ४,५,८, ( वामदेवो गौतम । वैश्वानरोऽग्नि )
—रूपो—
[ ४७५ ] ३, ५, ६ विश्वानि देवो वयुनानि विद्वान्।
( ६६१ ) १, १८९, १ —देव—।
[ ४६९ ] ३, ५, ११=३, १ २३=३, ६, ११ = ३, ७, ११
३, १५ ७=३, २२, ५=३ २३, ५
[ ४८१ ] ३, ६, २ ( विश्वामित्रो गाथिन । अग्नि )
आ रोदसी अपृणा जायमान

४ १८,५ ( अदिति ऋषिका । वामदेव )
**आ रोदसी अपृणाज्जायमानः ।**
(१८११) ७, १३, २ ( वसिष्ठो मैत्रावरुणि ।
वैश्वानरोऽग्नि )
**—जायमानः ।**
(१५९४) १० ४५, ६ ( वत्सप्रिर्भालन्दन । अग्नि )
**—अपृणाज्जायमानः ।**
[ ४८४ ] ३, ६, ५ ( विश्वामित्रो गाथिन । अग्नि )
**त्वं दूतो अभवो जायमानः ।**
[ ४८५ ] ३, ६, ६, ( विश्वामित्रो गाथिन । अग्नि )
**स्वध्वरा कृणुहि जातवेदः ।**
(९९३) ६, १०, १ ( भरद्वाजो बार्हस्पत्य । अग्नि )
**—करति जातवेदा ।**
( १२०६ ) ७, १७, ३ ( वसिष्ठो मैत्रावरुणि । अग्नि )
( १२०७ ) ७, १७, ४ ( वसिष्ठो मैत्रावरुणि । अग्नि )
**—करति जातवेदा ।**
[४८८] ३, ६, ९ (१९५२) २, ३, ११ **अनुष्वधमा वह मादयस्व ।**
[४९१] ३, ६, ११ ३, १, २३ ३, ५, ११
३ ६, ११, ३, ७, ११;
३, १५, ७ ३, २२, ५ ३, २३, ५
[४९७] ३, ७ ८, ( १९५९ ) ३, ४, ७
[ ५०० ] ३, ९, १ : ( ९०१ ) ५ २२, ३, ८, ११, ६
**देवं मर्तास ऊतये ।**
( ३३० ) १, १४४, ५ **— ऊतये हवामहे ।**
[ ५०० ] ३, ९, १ ( विश्वामित्रो गाथिन । अग्नि )
**अपां नपातं सुभग सुदीदितिं ।**
( १२२७ ) ८, १९, ४ ( सोभरि काण्व । अग्नि )
**ऊर्जो —।**
[ ५०० ] ३, ९, १; १, ४०, ४ **सुप्रतूर्तिमनेहसम् ।**
[ ५०५ ] ३, ९, ६ ( विश्वामित्रो गाथिन । अग्नि )
**तं त्वा मर्ता** अगृभ्णत **देवेभ्यो हव्यवाहन ।**
( १८५७ ) १०, ११८, ५ ( उरुक्षय आमहीयव ।
रक्षोहाऽग्नि )
**देवेभ्यो हव्यवाहन । तं त्वा हवन्त मर्त्याः ।**
१०, ११९, १३ ( लव ऐन्द्र । आत्मा [ इन्द्र ] )
**देवेभ्यो हव्यवाहनः ।**
( १६९८ ) १०, १५०, १ ( मृळीको वासिष्ठ । अग्निः )
**देवेभ्यो हव्यवाहन ।**

[५०७] ३, ९, ८ ( विश्वामित्रो गाथिन । अग्नि )
**शीरं पावकशोचिषम् ।**
( १३४० ) ८, ४३, ३१ ( विरूप आङ्गिरस । अग्नि )
( १४७३ ) ८, १०२, ११ ( प्रयोगो भार्गव, पावकोऽग्निर्बार्हस्पत्यो वा, गृहपति – यविष्ठौ सहस पुत्रौऽन्यतरो वा । अग्नि )
( १५८१ ) १०, २१, १ ( विमद ऐन्द्र प्राजापत्यो वा, वसुकृद्वा वासुक्र । अग्नि )
**—पावकशोचिषं विवक्षसे ।**
[५०८] ३, ९ ९ ( विश्वामित्रो गाथिन । अग्नि )
१०, ५२, ६ ( अग्नि सौचीक । विश्वेदेवा )
**त्रीणि शता त्री सहस्राण्यग्निं**
**त्रिंशच्च देवा नव चासपर्यन् ।**
**औक्षन्घृतैरस्तृणन्बर्हिरस्मा**
**आदिद्धोतारं न्यसादयन्त ॥**
[५०९] ३, १०, १ ( विश्वामित्रो गाथिन । अग्नि )
**त्वामग्ने मनीषिणः सम्राजं चर्षणीनाम् ।**
(१३६१) ८, ४४,१९ ( विरूप आङ्गिरस । अग्नि )
**—मनीषिणः ।**
१०, १३४, १ ( मान्धाता यौवनाश्व । इन्द्र )
**महान्त त्वा महीनां सम्राजं चर्षणीनाम् ।**
[५१०] ३, १०, २ ( विश्वामित्रो गाथिन । अग्नि )
**त्वां यज्ञेष्वृत्विजमग्ने ।**
**गोपा ऋतस्य दीदिहि स्वे दमे ।**
(१५८७) १०, २१,७ ( विमद ऐन्द्र प्राजापत्यो वा, वसुकृद्वा वासुक्र । अग्नि )
**त्वां यज्ञेष्वृत्विजं चारुमग्ने नि षेदिरे ।**
(१८५९) १०, ११८, ७ ( उरुक्षय आमहीयव ।
रक्षोहोऽग्नि )
**अदाभ्येन शोचिषाग्ने रक्षस्त्वं दह । गोपा ऋतस्य दीदिहि ।**
[५१०] ३, १०, २ **अग्ने होतारमीळते । ( १०१९ )**
६, १४, २, **अग्निं होतारमीळते** (२९०) १, १२८, ८
[५११] ३, १०, ३ ( विश्वामित्रो गाथिन । अग्नि )
**ददाशति समिधा जातवेदसे ।**
**(११७४)** ७, १४, १ ( वसिष्ठो मैत्रावरुणि । अग्नि )
**समिधा जातवेदसे ... ।**
**नमस्विनो वयं दाशेमाग्नये ।**
[५१२] ३, १०, ४ **अग्निर्देवेभिरागमत् ।**
( ५ ) १, १, ५ **देवो— ।**

[५१६] ३, १०, ८ स नः पावक दीदिहि
(१९) १, १२, १० —दीदिव·।
[५१७] ३, १०, ९ तं त्वा विप्रा विपन्यवो जागृवांसः
समिन्धते। १, २२, २१ ( विष्णुर्देवता )
तद्विप्रासो विपन्यवो —।
[५१६] ३, १०, ८ द्युमदस्मे सुवीर्यम्।
( ५८० ) ३, १३, ७ द्युमदग्ने—।
[५१७] ३, १०, ९ ( विश्वामित्रो गाथिन । अग्नि )
हव्यवाहममर्त्यं सहोवृधम्।
(७०४) ४, ८, १ ( वामदेवो गौतम । अग्नि )
हव्यवाहममर्त्यम्।
(१४७९) ८, १०२, १७ ( प्रयोगो भार्गव पावकोऽग्निर्बार्हस्पत्यो वा, गृहपति–यविष्ठौ सहस पुत्रावन्यतरो वा। अग्नि )
हव्यवाहममर्त्यम।
[५२०] ३ ११ ३ केतुर्यज्ञस्य पूर्व्यः।
१, ७, १० आत्मा—।
[५२१] ३, ११, ४ ( विश्वामित्रो गाथिन । अग्नि )
वह्नि देवा अकृण्वत।
(१२०३) ७, १६, १२ (वसिष्ठो मैत्रावरुणि । प्रगाथ )
[ ५२३ ] ३, ११, ६ ( विश्वामित्रो गाथिन । अग्नि )
अग्निस्तुविश्रवस्तम ।
(९१५) ५ २५ ५ ( वसयव आत्रेया । अग्नि )
—स्तमं।
[५२५] ३, ११, ८ ( विश्वामित्रो गाथिन । अग्नि )
मन्मभिः। विप्रासो जातवेदसः।
(१२१८) ८ ११ ५ ( वत्स काण्व । अग्नि )
मनामहे—।
[ ५७५ ] ३,१३,२ १,१३४,२ दक्षं सचन्त ऊतयः।
[ ५८० ] ३,१३,७ द्युमदग्ने सुवीर्यं।
( ५१६ ) ३,१०,८ द्युमदस्मे—।
[ ५८५ ] ३,१४,५ ( ऋषभो वैश्वामित्र । अग्नि )
उत्तानहस्ता नमसोपसद्य।
(१०८७) ६,१६, ४६ (भरद्वाजो बार्हस्पत्य । अग्नि )
उत्तानहस्तो नमसा विवासेत्।
( १६३८ ) १०,७९,२ ( अग्नि सौचीको वैश्वानरो वा सप्तिर्वाजंभरो वा। अग्नि )
उत्तानहस्ता नमसाधि विक्षु।
[ ५९१ ] ३,१५,५ अच्छिद्रा शर्म जरितःपुरूणि।
२,२५,५ —दधिरे—।
(४६९) ३,१५,७=३,१,२३=३,५,११=
३,६,११=३,७,११=३,२२,५=३,२३,५
[ ५९५ ] ३,१६,२ ( उत्कील कात्य । अग्निः )
इमं नरो मरुतः सश्चता वृधं।
७,१८,२५ ( वसिष्ठो मैत्रावरुणि । सुदास पैजवन )
—मरुतः सश्चतानु।
[ ५९९ ] ३,१६,६ तुविद्युम्न यशस्वता।
१, ९, ६ —यशस्वतः।
[ ६०१ ] ३,१७,२ यथा दिवो जातवेदश्चिकित्वान्।
( ६७३ ) ४,३,८ साधा दिवो—।
[ ६०३ ] ३,१७,४, २,४०,१ अकृण्वन्नमृतस्य देवा
नाभिम्।
[ ६०४ ] ३,१७,५ ( कतो वैश्वामित्र । अग्नि )
यस्त्वद्धोता पूर्वो अग्ने यजीयान्द्विता च सत्ता
स्वधया च शंभुः।
( ७८२ ) ५,३,५ ( वसुश्रुत आत्रेय । अग्निः )
न त्वद्धोता पूर्वो अग्ने यजीयान्न काव्यैः परो
अस्ति स्वधावः।
[ ६१० ] ३,१९,१ ( गाथी कौशिक । अग्नि )
स नो यक्षद्देवताता यजीयान्।
( १६१६ ) १०,५३,१ (देवा अग्नि सौचीक। अग्नि )
[ ६११ ] ३,१९,२ ( गाथी कौशिकः। अग्नि )
सुद्युम्नां रातिनीं घृताचीम्।
प्रदक्षिणिद्देवतातिमुराणः।
(६८४) ४,६,३ ( वामदेवो गौतम । अग्नि )
यता सुजूर्णी रातिनी घृताची ।
[६१८] ३, २१, १ (६२१) ३।२१।४ स्तोकानाम्
(३, २१, ४ स्तोकासो)
अग्ने मेदसो घृतस्य।
[६१९] ३, २१, २ ( गाथी कौशिक । अग्नि )
श्रेष्ठं नो धेहि वार्यम्।
१०, २४, २ ( विमद ऐन्द्र प्राजापत्यो वा, वसुकृद्वा वासुक. । इन्द्र )
·वार्यं विवक्षसे।
[४६९] ३, २२, ५ (गाथी कौशिक । अग्नि )
३, १, २३ ( विश्वामित्रो गाथिन । अग्नि )
३, ५, ११ = ३, ६, ११ = ३, ७, ११=

३, १५, ७ ( उत्कील कात्य । अग्नि )
३, २३, ५ ( देवश्रवा देववातश्च भारतौ । अग्नि. )
इळामग्ने पुरुदंसं सनिं गोः साध ।
स्यान्नः सूनुस्तनयो त्वस्मे ॥
[५२७] ३, २४, १ ३, ८, ३ वर्चो धा यज्ञवाहसे ।
[५२९] ३, २४, ३ (विश्वामित्रो गाथिन । अग्नि )
अग्ने द्युमन जागृवे सहसः सूनवाहुत ।
एद बर्हिः सदो मम ।
(१२४८) ८, १९, २५ ( सोभरि काण्व । अग्नि )
यदग्ने ।
सहसः सूनवाहुत ।
(१३७१) ८, ७५, ३ ( विरूप आङ्गिरस । अग्नि )
सहसः सूनवाहुत ।
८, १७, १ ( इरिम्बिठि काण्व । इन्द्र )
एद बर्हिः सदो मम ।
[५३८] ३, २७, २ गिरा यज्ञस्य साधनम् ।
(९६) १, ४४, ११ नि त्वा — ।
८, ६, ३ स्तोमैर्यज्ञस्य— ।
(१२७८) ८, २३, ९ यज्ञस्य साधनं गिरा ।
[५३९] ३, २७,३ अति द्वेषांसि तरेम ।
(४४३) २, ७, ३ अति गाहेमहि द्विषः ।

[५४०] ३, २७, ४ अग्निः पावक ईड्यः ।
(११८६) ७, १५ १०, शुचि — ।
[५४१] ३, २७, ५ पृथुपाजा अमर्त्यो ।
(१७३७) ३, २, ११ वैश्वानरः— ।
[५४३] ३, २७, ७ ( विश्वामित्रो गाथिन । अग्नि )
होता देवो अमर्त्यः ।
(१२४७) ८ ,१९, २४ ( सोभरि काण्व । अग्नि )
[५४९] ३, २७,१३ ( विश्वामित्रो गाथिन । अग्नि )
तिरस्तमांसि दर्शतः ।
(१४४६) ८, ७४, ५ ( गोपवन आत्रेय । अग्नि )
दर्शतम् ।
[५५२] ३, २८, १ (५५७) ३, २८, ६
पुरोळाशं जातवेदः ।
[५६१] ३, २९, ४ नाभा पृथिव्या अधि ।
(१९४८) २, ३, ७ —अधि सानुषु त्रिषु ।
[५६१] ३, २९, ४, ( १०५ ) १, ४५, ६ अग्ने हव्याय वोळ्हवे ।
(८६२) ५, १४, ३ अग्निं हव्याय— ।
[५७३] ३, २९, १६ ( विश्वामित्रो गाथिन । अग्नि )
प्रजानन्विद्वाँ उप याहि सोमम् ।
३, ३५, ४ ( विश्वामित्रो गाथिन । इन्द्र )

# ऋग्वेदस्य चतुर्थं मण्डलम् ।

[ २४५० ] ४, १, ३, ( वामदेवो गौतम । अग्नि , अग्नी वरुणौ )
अग्ने मृळीक वरुणे सचा विदो मरुत्सु विश्वभानुषु ।
८, २७, ३ ( मनुर्वैवस्वत । विश्वेदेवा )
प्र सू न एत्वध्वरोऽग्ना देवेषु पूर्व्य ।
आदित्येषु प्र वरुणे धृतव्रते मरुत्सु विश्वभानुषु ।
[ ६३७ ] ४, १, ११ महो बुध्ने रजसो अस्य योनौ ।
४, १७, १४ त्वचो बुध्ने—
[ ६३९ ] ४, १, १३ अश्मव्रजाः सुदुघा वव्रे अन्तः ।
५, ३१, ३ प्राचोदयत्सुदुघा— ।
[ ६४१ ] ४, १, १५ ( वामदेवो गौतम । अग्नि )
दळ्हं नरो वचसा दैव्येन व्रजं गोमन्तमुशिजो वि वव्रुः ।
४, १६, ६ ( वामदेवो गौतम । इन्द्र )
वचोभिर्व्रजं — ।

( १५९९ ) १०; ४५, ११ ( वत्सप्रिर्भालन्दन । अग्निः )
व्रजं — ।
[ ६४३ ] ४ १, १७ ( वामदेवो गौतम । अग्नि )
ऋजु मर्तेषु वृजिना च पश्यन् ।
६, ५१, २ ( ऋजिश्वा भारद्वाज । विश्वेदेवाः )
७, ६०, २ ( वसिष्ठो मैत्रावरुणि । मित्रावरुणौ )
[ ६४६ ] ४, १, २० (वामदेवो गौतम । अग्नि )
सुमृळीको भवतु जातवेदाः ।
६, ४७, १२ ( गर्गो भारद्वाज । इन्द्र )
१०, १३१, ६ ( सुकीर्ति काक्षीवत । इन्द्र )
विश्ववेदाः ।
[ ६४७ ] ४, २, १ ( २३४ ) १, ७७, १
यो मर्त्येष्वमृत ऋतावा ।
[ ६४८ ] ४, २, २ इह त्वं सूनो सहसो नो अद्य ।

( ११७ ) १, ५८, ८ अच्छिद्रा सूनो ।
६, ५०, ९ उत त्वं सूनो— ।
[ ६६४ ] ४, २, १८ आ यूथेव क्षुमति पश्वो अख्य
देवानां यज्जनिमान्त्युग्र ।
७, ६०, ३ सं यो यूथेव जनिमानि चष्टे ।
८, २५, ७ अधि या बृहतो दिवो३ भि यूथेव पश्यत ।
[ ६६६ ] ४, २, २०, (२१४) १, ७३, १० एता ते अग्न
उचथानि वेधो ।
[ ६६६ ] ४, २, २० उच्छोचस्व कृणुहि वस्यसो न ।
८, ४८, ६ प्र चक्षय कृणुहि— ।
[ ६६७ ] ४, ३, २ १, १२४, ७, १०, ७१, ४, ( १६६३ )
१०, ९१, १३ जायेव पत्य उशती सुवासा ।
[ ६७३ ] ४, ३, ८ साधो दिवो जातवेदश्चिकित्वान् ।
( ६०१ ) ३, १७, २ यथा दिवो— ।
[ ६७५ ] ४, ३, १० ( वामदेवो गौतम । अग्नि )
वृषा शुक्रं दुदुहे पृश्निरूध ।
६, ६६ १ ( भरद्वाजो बार्हस्पत्य । मरुत )
सकृच्छुक्रं दुदुहे पृश्निरूध ।
[ ६७६ ] ४, ३, ११ ( वामदेवो गौतम । अग्नि )
आवि स्वरभवज्जाते अग्नौ ।
(२३९८) १०, ८८, २ मूर्धन्वानाङ्गिरसो वामदेव्यो वा ।
सूर्य—वैश्वानरो )
[ ६८३ ] ४, ६, २ ( वामदेवो गौतम. । अग्नि )
ऊर्ध्वं भानुं सवितेवाश्रेन् ।
( ७४१ ) ४ १३, २ ( वामदेवो गौतम । अग्नि
[ लिंगोक्तदेवता इति एके ] )
—सविता देवो अश्रेद् ।
( ७४६ ) ४, १४, २ ( वामदेवो गौतम । अग्नि
[ लिङ्गोक्तदेवता इति एके ] )
ऊर्ध्वं केतुं सविता देवो अश्रेज् ।
७, ७२, ४, ( वसिष्ठो मैत्रावरुणि । अश्विनौ )
—सविता देवो अश्रेद् ।
[ ६८४ ] ४, ६ ३ यता सुजूर्णी रातिनी घृताची ।
६, ६३, ४ प्र रातिरेति जूर्णिनी घृताची ।
[ ६८४ ] ४, ६, ३; ( ६११ ) ३, १९, २
प्रदक्षिणिद्देवतातिमुराणः ।
[ ६८५ ] ४, ६, ४ ( वामदेवो गौतमः । अग्नि )
स्तीर्णे बर्हिषि समिधाने अग्ना ।
६, ५२, १७ ( ऋजिश्वा भरद्वाज. । विश्वेदेवा )
—अग्नौ ।

[ ६८६ ] ४, ६, ५ ( वामदेवो गौतम । अग्नि
अग्निर्मन्द्रो मधुवचा ऋतावा
( ११४५ ) ७, ७, ४ ( वसिष्ठो मैत्रावरुणि । अग्नि
[ ६९२ ] ४, ६, ११ ( वामदेवो गौतम । अग्नि )
होतारमग्निं मनुषो नि षेदुर्नमस्यन्त
उशिजः शंसमायोः
( ७८१ ) ५, ३, ४ ( वसुश्रुत आत्रेय । अग्नि
—नि षेदुर्दशस्यन्त उशिज —
[ ६९३ ] ४, ७, १ ( वामदेवो गौतम । अग्निः )
होता यजिष्ठो अध्वरेष्वीड्यः
( १३९१ ) ८, ६०, ३ ( भर्ग प्रगाथ. । अग्निः
मन्द्रो —ड्यो
[ ६९६ ] ४, ७, ४ १, ८६, ५, ( ९०३ ) ५, २३ १
विश्वा यश्चर्षणीरभि
[ ७०० ] ४, ७ ८ विदुष्टरो दिव आरोधनानि ।
( ७०७ ) ४, ८, ४ विद्वाँ आरोधनं दिव
[ ७०१ ] ४ ७ ९ कृष्णं त एम रुशतः पुरो भाः ।
( ११३ ) १, ५८ ४— रुशदूर्मे अजर ।
[ ७०२ ] ४, ७, १० यदस्य वातो अनुवाति शोचि· ।
( ३५१ ) १, १४८, ४; ( ११२५ ) ७, ३,
आदस्य वातो अनु वाति शोचिः
( १६९३ ) १०, १४२, ४ यदा ते वातो अनुवाति
शोचिः
[ ७०४ ] ४, ८, १, ( १४७९ ) ८, १०२, १७ हव्यवाह
ममर्त्यम् । ३, १०, ९ —मर्त्य सहोवृधम्
[ ७०५ ] ४, ८, २; (२) १, १, २ स देवाँ एह वक्षति
[ ७०७ ] ४, ८, ४ विद्वाँ आरोधनं दिवः ।
( ७०० ) ४ ७, ८ विदुष्टरो दिव आरोधनानि
[ ७०९ ] ४, ८, ६, ( वामदेवो गौतमः । अग्निः
ससवांसो वि शृण्विरे
८, ५४, ६ ( मातरिश्वा काण्व । इन्द्रः
[ ७१२ ] ४, ९, १ अग्ने मृळ महाँ असि ।
( ७९ ) १, ३६, १२ स नो मृळ
[ ७१६ ] ४, ९, ५ ( वामदेवो गौतम । अग्नि )
वेषि ह्यध्वरीयताम्
हव्या...
( ९६१ ) ६, २, १० ( भारद्वाजो बार्हस्पत्य । अग्नि
वेषि—
. . . हव्यम्—
[ ७२४ ] ४, १०, ५ श्रिये रुक्मो न रोचत उपाके ।

(११२९) ७. ३, ६ वि यद्रुक्मो न रोचस उपाके।
[७३२] ४, ११, ५ ( वामदेवो गौतम । अग्नि )
त्वामग्ने ...।
. दमूनसं गृहपतिममूरम्।
(८२१) ५, ८, १ ( इष आत्रेय । अग्नि )
त्वामग्ने— ।
.. वरेण्यम्— ।
[७३६] ४, १२,३ अग्निर्वाजस्य परमस्य रायः।
७, ६०, ११ वाजस्य साता ।
[७३६] ४, १२, ३ ( वामदेवो गौतम । अग्नि )
दधाति रत्नं विधते यविष्ठो।
(१२०३) ७, १६, १२ ( वसिष्ठो मैत्रावरुणि । अग्नि )
—विधते सुवीर्यम्।
[७३९] ४, १२, ६ ( वामदेवो गौतम । अग्नि )
१०,१२६,८ ( कुल्मलबर्हिष शैलूषि अहोमुग्वा वामदेव्य । विश्वेदेवा )
यथा ह त्यद्वसवो गौर्यं चित्पदि षितामगुञ्चता यजत्राः।
एवो ष्व १ स्मन्मुञ्चता व्यंहः प्र तार्यग्ने प्रतर न आयुः।
[७४०] ४, १३, १ यातमश्विना सुकृतो दुरोणम्।
१, ११७, २ ( अश्विनौ )
[७४१] ४, १३, २, ७, ७२ ४ उर्ध्वं भानुं सविता देवो अश्रेत्। (६८३) ४, ६, २
—सवितेवाश्रेत्। (७४६) ४, १४ २ ऊर्ध्वं केतुं— ।
[७४४] ४, १३, ५=४, १४, ५ ( वामदेवो गौतम । अग्नि ( लिङ्गोक्तदेवता इति एके )
अनायतो अनिबद्धः कथायं न्यङ्ङुत्तानोऽव पद्यते न।
कया याति स्वधया को ददर्श दिवः स्कम्भः समृतः पाति नाकम्।
[ ७४६ ] ४, १४, २ ऊर्ध्वं केतुं सविता देवो अश्रेत्।
( ७४१ ) ४, १३, २

[७४६] ४, १४, २ ज्योतिर्विश्वस्मै भुवनाय कृण्वन्।
१, ९२, ४ — कृण्वती।
[७४६] ४, १४, २, १, ११५, १ आप्रा द्यावापृथिवी अन्तरिक्षं।
[७४७] ४, १४, ३; उषा ईयते सुयुजा रथेन।
१, ११३, १४ ओषा याति— ।
[७४८] ४, १४ ४ ( वामदेवो गौतम । अग्नि )
रथा अश्वास उषसो व्युष्टौ।
४, ४५, २ ( वामदेवो गौतम । अश्विनौ )
—उषसो व्युष्टिषु ।
[ ७४८ ] ४, १४, ४ अस्मिन्यज्ञे वृषणा मादयेथाम्।
१, १८४, २ अस्मे उ षु वृषणा मादयेथाम्।
[ ७४४ ] ४, १४, ५; ४, १३, ५

[७५१] ४, १५, ३ ( वामदेवो गौतम । अग्निः )
दधद्रत्नानि दाशुषे।
९, ३, ६ ( शुनःशेप आर्जीगर्ति स देवरात कृत्रिमो वैश्वामित्रः। पवमान सोम )
[ ७५४ ] ४, १५, ६ ( वामदेवो गौतम. । अग्नि )
तमर्वन्तं न सानसिम्।
( १४७४)८,१०२,१२(प्रयोगो भार्गव ,पावकोऽग्निर्बार्हस्पत्यो वा गृहपति–यविष्ठौ सहस. पुत्रौऽन्यतरो वा। अग्निः )
४, १५, ७, ९ ( म ७, देवता सोमक साहदेव्य . कुमार साहदेव्यः। म ९, अश्विनौ )
४, १५,८ कुमारात्साहदेव्यात्।
[ १८९७ ] ४, ५८, ३ ( वामदेवो गौतम। अग्नि सूर्यो वा आपो वा गावो वा घृतस्तुतिर्वा )
महो देवो मर्त्याँ आ विवेश
८, ४८, १२ अमर्त्यो— ।
[ १९०४ ] ४, ५८, १० अभ्यर्षत सुष्टुतिं गव्यमाजिम्।
९, ६२, ३ ( पवमान सोम. )।

# ऋग्वेदस्य पञ्चमं मण्डलम्।

[७५९] ५, १, ५ ( बुधगविष्ठिरावात्रेयौ। अग्नि )
दमेदमे सप्त रत्ना दधानो।
६, ७४, १ ( भरद्वाजो बार्हस्पत्यः। सोमारुद्रौ )
—दधाना।

[७५९, ७६०] ५, १, ५-६ अग्निर्होता नि षसादा ( ६ न्यसीदत् ) यजीयान्।
(९४०) ६, १, २ अधा होता न्यसीदो यजीयान्।
(९४४) ६, १, ६ होता मन्द्रो नि षसादा यजीयान्।

१०, ५२, २ अहं होता न्यसीदं यजीयान्।
[७६१] ५, १, ७ अग्निं होतारमीळते नमोभिः।
(२९०) १, १२८, ८ अग्निं होतारमीळते वसुधितिं। (१०१९) ६, १४, २ अग्निं होतारमीळते।
[७६२] ५, १, ८ सहस्रशृङ्गो वृषभस्तदोजाः।
७, ५५, ७ — वृषभः।
[७६५] ५, १, ११ एह देवान्हविरद्याय वक्षि।
(७९३) ५, ४, ४ आ च देवान्हवि ..।
[७७४] ५, २, ८ ( कुमार आत्रेय वृशो वा जानः उभौ वा, २, ९ वृशो जान । अग्नि )
प्र मे देवानां व्रतपा उवाच।
इन्द्रो विद्वाँ अनु हि त्वा चचक्ष
तेनाहमग्ने अनुशिष्ट आगाम्।
१०, ३२, ६ ( कवष ऐलूष. । इन्द्र. )
[७७७] ५, २, ११; ५,२९, १५ रथं न धीरः स्वपा अतक्षम्।
१, १३०, ६ — स्वपा अतक्षिषुः।
[७७९] ५, ३, १ त्वं मित्रो भवसि यत्समिद्धः।
(४७३) ३, ५, ४ मित्रो अग्निर्भवति यत्समिद्धो।
[७८१] ५, ३, ४, (६९२) ४, ६, ११ होतारमग्निं मनुषो नि षेदुर्दशस्यन्त (४, ६, ११ नमस्यन्त) उशिजः शंसमायोः।
[७८५] ५, ३, ८ ( वसुश्रुत आत्रेय. । अग्नि. )
त्वामस्या व्युषि देव पूर्वे दूतं कृण्वाना अयजन्त हव्यैः।
(१६८१) १०, १२२, ७ ( चित्रमहा वासिष्ठ । अग्नि. )
त्वामिदस्या उषसो व्युष्टिषु दूतं कृण्वाना अजयन्त मानुषाः।
[७९१] ५, ४, २ हव्यवाळग्निरजरः पिता नः।
(१७१८) ३, २, २ हव्यवाळग्निरजरश्चनोहितः।
[७९१] ५, ४, २, ३, ५४, २२, ६, १९, ३
अस्मद्र्यक्सं मिमीहि श्रवांसि।
[७९२] ५, ४, ३ विशां कविं विश्पतिं मानुषीणां।
(१७३६) ३, २, १०— मानुषीरिषः।
(९४६) ६, १, ८ — शश्वतीनां।
[७९३] ५, ४, ४ यतमानो रश्मिभिः सूर्यस्य।
१, १२३, १२ यतमाना—।
[७९३] ५, ४, ४ आ च देवान्हविरद्याय वक्षि।
(७६५) ५, १, ११ एह देवान्ह—।

[७९६] ५, ४, ७ ( वसुश्रुत आत्रेय । अग्नि )
वयं ते अग्न उक्थैर्विधेम वयं हव्यैः पावक भद्रशोचे।
(११७५) ७, १४, २ ( वसिष्ठो मैत्रावरुणि । अग्नि )
वयं ते अग्ने समिधा विधेम।
वयं देव हविषा भद्रशोचे।
[७९७] ५, ४, ८ ( वसुश्रुत आत्रेय । अग्नि )
अस्माकमग्ने अध्वरं जुषस्व।
६, ५२, १२ ( ऋजिश्वा भारद्वाज । विश्वेदेवा )
इम नो अग्ने अध्वरं।
७, ४२, ५ (वसिष्ठो मैत्रावरुणि । विश्वेदेवा)
इमं नो अग्ने —।
[७९८] ५, ४, ९ अस्माकं बोध्यविता तनूनाम्।;
७, ३२, ११ (इन्द्रः)
[८०१-१०] ५, ६, १ - १०; ९, २०, ४
इषं स्तोतृभ्य आ भर।
८, ७७, ८ तेन स्तोतृभ्य आ भर।
८, ९३, १९ कया स्तोतृभ्य—।
[८०५] ५, ६, ५ ( वसुश्रुत आत्रेय । अग्नि )
आ ते अग्न ऋचा हविः।
(१०८८) ६,१६,४७ ( भरद्वाजो बार्हस्पत्यः । अग्निः )
— हविर्।
[८०६] ५,६,६, १,८१,९ विश्वं पुष्यन्ति वार्यम्।
१०,१३३, २ विश्वं पुष्यसि—।
[८१०] ५, ६१० ( वसुश्रुत आत्रेयः । अग्निः )
दधदस्मे सुवीर्यमुत त्यदाश्व्यम्।
८,६,२४ ( वत्सः काण्वः । इन्द्रः )
उत त्यदाश्व्यम्।
८,३१,१८ ( मनुर्वैवस्वतः । दम्पत्याशिषः )
असदत्र सुवीर्यमुत त्यदाश्व्यम्।
[८११] ५,७,१ ऊर्जो नप्त्रे सहस्वते।
(१४६९) ८, १०२, ७ अच्छा नप्त्रे—।
[८२१] ५,८,१ दमूनसं गृहपतिं वरेण्यम्।
(७३२) ४, ११, ५— गृहपतिममूरम्।
[८३०] ५,९,३ ( गय आत्रेयः । अग्निः )
यं शिशुं यथा जनित्रारणी।
विशामग्निं स्वध्वरम्।
(१०८१) ६, १६, ४० (भरद्वाजो बार्हस्पत्यः । अग्निः)
शिशुं जातं न बिभ्रति।
विशामग्निं स्वध्वरं।

तमस्य विष्णुर्महिमानमोजसां—ऽशुं दधन्वान् मधुनो वि रप्शते ।
देवेभिरिन्द्रो मघवा सयावभि—र्वृत्रं जघन्वाँ अभवद् वरेण्यः २
वृत्रेण यदहिना बिभ्रदायुधा समस्थिथा युधये शंसमाविदे ।
विश्वे ते अत्र मरुतः सह त्मना ऽवर्धन्नुग्र महिमानमिन्द्रियम् ३
जज्ञान एव व्यबाधत स्पृधः प्रापश्यद् वीरो अभि पौंस्यं रणम् ।
अवृश्चदद्रिमव सस्यदः सृज—दस्तभ्नान्नाकं स्वपस्यया पृथुम् ४
आदिन्द्रः सत्रा तविषीरपत्यत वरीयो द्यावापृथिवी अबाधत ।
अवाभरद्धृषितो वज्रमायसं शेवं मित्राय वरुणाय दाशुषे ५
इन्द्रस्यात्र तविषीभ्यो विरप्शिन ऋघायतो अरंहयन्त मन्यवे ।
वृत्रं यदुग्रो व्यवृश्चदोजसा ऽपो बिभ्रतं तमसा परीवृतम् ६ २७५०
या वीर्याणि प्रथमानि कर्त्वा महित्वेभिर्यतमानो समीयतुः ।
ध्वान्तं तमोऽव दध्वसे हत इन्द्रो मह्ना पूर्वहूतावपत्यत ७
विश्वे देवासो अध वृष्ण्यानि ते ऽवर्धयन्त्सोमवत्या वचस्यया ।
रद्धं वृत्रमहिमिन्द्रस्य हन्मना ऽग्निर्न जम्भैस्तृष्वन्नमावयत् ८
भूरि दक्षेभिर्वचनेभिर्ऋक्वभिः सख्येभिः सख्यानि प्र वोचत ।
इन्द्रो धुनिं च चुमुरिं च दम्भय—ञ्छ्रद्धामनस्या शृणुते दभीतये ९
त्वं पुरूण्या भरा स्वश्व्या येभिर्मंसै निवचनानि शंसन् ।
सुगेभिर्विश्वा दुरिता तरेम विदो षु ण उर्विया गाधमद्य १० २७५४

॥ २५२ ॥ ( ऋ० १०।११३।१-९ )

( २७५५-२७६३ ) स्थौरोऽग्नियुत स्थौरोऽग्नियूपो वा । त्रिष्टुप् ।

पिबा सोमं महत इंद्रियाय पिबा वृत्राय हन्तवे शविष्ठ ।
पिब राये शवसे हूयमानः पिब मध्वस्तृपदिन्द्रा वृषस्व १ २७५५
अस्य पिब क्षुमतः प्रस्थितस्ये—न्द्र सोमस्य वरमा सुतस्य ।
स्वस्तिदा मनसा मादयस्वा—ऽर्वाचीनो रेवते सौभगाय २
ममत्तु त्वा दिव्यः सोम इन्द्र ममत्तु यः सूयते पार्थिवेषु ।
ममत्तु येन वरिवश्चकर्थ ममत्तु येन निरिणासि शत्रून् ३
आ द्विबर्हा अमिनो यात्विन्द्रो वृषा हरिभ्यां परिषिक्तमन्धः ।
गव्या सुतस्य प्रभृतस्य मध्वः सत्रा खेदामरुशहा वृषस्व ४

नि तिग्मानि भ्राशयन् भ्राश्या न्यव स्थिरा तनुहि यातुजूनाम् ।
उग्राय ते सहो बलं ददामि प्रतीत्या शत्रून् विगदेषु वृश्च ५
व्य१र्य इन्द्र तनुहि श्रवांस्यो जः स्थिरेव धन्वनोऽभिमातीः ।
अस्मद्र्यग्वावृधानः सहोभि रनिभृष्टस्तन्वं वावृधस्व ६ २७६०
इदं हविर्मघवन् तुभ्यं रातं प्रति सम्राळहृणानो गृभाय ।
तुभ्यं सुतो मघवन् तुभ्यं पक्वो३ ऽद्धीन्द्र पिब च प्रस्थितस्य ७
अद्धीदिन्द्र प्रस्थितेमा हवींषि चनो दधिष्व पचतोत सोमम् ।
प्रयस्वन्तः प्रति हर्यामसि त्वा सत्याः सन्तु यजमानस्य कामाः ८
प्रेन्द्राग्निभ्यां सुवचस्यामियर्मि सिंधाविव प्रेरयं नावमर्कैः ।
अया इव परि चरन्ति देवा ये अस्मभ्यं धनदा उद्भिदश्च ९ २७६३

॥ २५३ ॥ ( ऋ० १०।१२०।१-९ )

( २७६४-२७७२ ) आथर्वणो बृहद्दिवः ।

तदिदास भुवनेषु ज्येष्ठं यतो जज्ञ उग्रस्त्वेषनृम्णः ।
सद्यो जज्ञानो नि रिणाति शत्रू ननु यं विश्वे मदन्त्यूमाः १
वावृधानः शवसा भूर्योजाः शत्रुर्दासाय भियसं दधाति ।
अव्यनच्च व्यनच्च सस्नि सं ते नवन्त प्रभृता मदेषु २ २७६५
त्वे क्रतुमपि वृञ्जन्ति विश्वे द्विर्यदेते त्रिर्भवन्त्यूमाः ।
स्वादोः स्वादीयः स्वादुना सृजा स मदः सु मधु मधुनाभि योधीः ३
इति चिद्धि त्वा धना जयन्तं मदेमदे अनुमदन्ति विप्राः ।
ओजीयो धृष्णो स्थिरमा तनुष्व मा त्वा दभन् यातुधाना दुरेवाः ४
त्वया वयं शाशद्महे रणेषु प्रपश्यन्तो युधेन्यानि भूरि ।
चोदयामि त आयुधा वचोभिः सं ते शिशामि ब्रह्मणा वयांसि ५
स्तुषेय्यं पुरुवर्पसमृभ्व मिनतममाप्त्यमाप्त्यानाम् ।
आ दर्षते शवसा सप्त दानून् प्र साक्षते प्रतिमानानि भूरि ६
नि तद्दधिषेऽवरं परं च यस्मिन्नाविथावसा दुरोणे ।
आ मातरा स्थापयसे जिगत्नू अत इनोषि कर्वरा पुरूणि ७ २७७०
इमा ब्रह्म बृहद्दिवो विवक्ती न्द्राय शूषमग्रियः स्वर्षाः ।
महो गोत्रस्य क्षयति स्वराजो दुरश्च विश्वा अवृणोदप स्वाः ८

एवा महान् बृहद्दिवो अथर्वा ऽवोचत् स्वां तन्वमिन्द्रमेव ।
स्वसारो मातरिभ्वरीररिप्रा हिन्वन्ति च शवसा वर्धयन्ति च ९ २७७२

॥ २५४ ॥ (ऋ० १०।१३१।१-३,६-७) (२७७३-२७७७) सुकीर्तिः काक्षीवत ।

अप प्राच इन्द्र विश्वाँ अमित्रा नपापाचो अभिभूते नुदस्व ।
अपोदीचो अप शूराधराच उरौ यथा तव शर्मन् मदेम १
कुविदङ्ग यवमन्तो यवं चिद् यथा दान्त्यनुपूर्वं वियूय ।
इहेहैषां कृणुहि भोजनानि ये बर्हिषो नमोवृक्तिं न जग्मुः २
नहि स्थूर्यृतुथा यातमस्ति नोत श्रवो विविदे संगमेषु ।
गव्यन्त इंद्रं सख्याय विप्रा अश्वायंतो वृषणं वाजयन्तः ३ २७७५
इंद्रः सुत्रामा स्ववाँ अवोभिः सुमृळीको भवतु विश्ववेदाः ।
बाधतां द्वेषो अभयं कृणोतु सुवीर्यस्य पतयः स्याम ६
तस्य वयं सुमतौ यज्ञियस्या ऽपि भद्रे सौमनसे स्याम ।
स सुत्रामा स्ववाँ इंद्रो अस्मे आराच्चिद् द्वेषः सनुतर्युयोतु ७ २७७७

॥ २५५ ॥ ( १०।१३३।१-७ )

( २७७८-२७८४ ) सुदाः पैजवनः । शक्करी, ४-६ महापङ्क्ति , ७ त्रिष्टुप् ।

प्रो ष्वस्मै पुरोरथ मिन्द्राय शूषमर्चत ।
अभीके चिदु लोककृत् संगे समत्सु वृत्रहा ऽस्माकं बोधि चोदिता
नभन्तामन्यकेषां ज्याका अधि धन्वसु १
त्वं सिंधूँरवासृजो ऽधराचो अहन्नहिम् ।
अशत्रुरिन्द्र जज्ञिषे विश्वं पुष्यसि वार्यं तं त्वा परि ष्वजामहे
नभंतामन्यकेषां ज्याका अधि धन्वसु २
वि षु विश्वा अरातयो ऽर्यो नशंत नो धियः ।
अस्तासि शत्रवे वधं यो न इंद्र जिघांसति या ते रातिर्ददिर्वसु
नभंतामन्यकेषां ज्याका अधि धन्वसु ३ २७८०
यो न इंद्राभितो जनो वृकायुरादिदेशति ।
अधस्पदं तमीं कृधि विबाधो असि सासहि र्नभंतामन्यकेषां ज्याका अधि धन्वसु ४
यो न इंद्राभिदासति सनाभिर्यश्च निष्ट्यः ।
अव तस्य बलं तिर महीव द्यौरध त्मना नभंतामन्यकेषां ज्याका अधि धन्वसु ५

वयमिन्द्र त्वायवः सखित्वमा रभामहे ।
ऋतस्य नः पथा नयाऽति विश्वानि दुरिता नभंतामन्यकेषां ज्याका अधि धन्वसु ६
अस्मभ्यं सु त्वमिन्द्र तां शिक्ष या दोहते प्रति वरं जरित्रे ।
अच्छिद्रोध्नी पीपयद् यथा नः सहस्रधारा पयसा मही गौः ७ २७८४

॥ २५६ ॥ (ऋ० १०।१३४।१-७)

( २७८५-२७९१ ) १-६ (पूर्वार्धस्य) मान्धाता यौवनाश्वः, ६ (उत्तरार्धस्य)-७ गोधा ऋषिका । महापङ्क्ति , ७ पंक्तिः ।

उभे यदिन्द्र रोदसी आपप्राथोषा इव ।
महान्तं त्वा महीनां सम्राजं चर्षणीनां देवी जनित्र्यजीजनद् भद्रा जनित्र्यजीजनत् १ २७८५
अव स्म दुर्हणायतो मर्तस्य तनुहि स्थिरम् ।
अधस्पदं तमीं कृधि यो अस्माँ आदिदेशति देवी जनित्र्यजीजनद् भद्रा जनित्र्यजीजनत् २
अव त्या बृहतीरिषो विश्वश्चन्द्रा अमित्रहन् ।
शचीभिः शक्र धूनुहीन्द्र विश्वाभिरूतिभिर्देवी जनित्र्यजीजनद् भद्रा जनित्र्यजीजनत् ३
अव यत् त्वं शतक्रतविन्द्र विश्वानि धूनुषे ।
रयिं न सुन्वते सचा सहस्रिणीभिरूतिभिर्देवी जनित्र्यजीजनद् भद्रा जनित्र्यजीजनत् ४
अव स्वेदा इवाभितो विष्वक् पतन्तु दिद्यवः ।
दूर्वाया इव तन्तवो व्य१स्मदेतु दुर्मतिर्देवी जनित्र्यजीजनद् भद्रा जनित्र्यजीजनत् ५
दीर्घं ह्यङ्कुशं यथा शक्तिं बिभर्षि मंतुमः ।
पूर्वेण मघवन् पदाऽजो वयां यथा यमो देवी जनित्र्यजीजनद् भद्रा जनित्र्यजीजनत् ६ २७९०
नकिर्देवा मिनीमसि नकिरा योपयामसि मंत्रश्रुत्यं चरामसि ।
पक्षेभिरपिकक्षेभिरत्राभि सं रभामहे ७ २७९१

॥ २५७ ॥ (ऋ० १०।१३८।१-६) (२७९२-२७९७) अङ्ग औरवः । जगती ।

तव त्य इंद्र सख्येषु वह्नय ऋतं मन्वाना व्यदर्दिरुर्वलम् ।
यत्रा दशस्यन्नुषसो रिणन्नपः कुत्साय मन्मन्नह्यश्च दंसयः १
अवासृजः प्रस्वः श्वञ्चयो गिरीनुदाज उस्रा अपिबो मधु प्रियम् ।
अवर्धयो वनिनो अस्य दंससा शुशोच सूर्य ऋतजातया गिरा २
वि सूर्यो मध्ये अमुचद् रथं दिवो विद् दासाय प्रतिमानमार्यः ।
दृळ्हानि पिप्रोरसुरस्य मायिन इंद्रो व्यास्यच्चकृवाँ ऋजिश्वना ३

अनाधृष्टानि धृषितो व्यास्य—न्निधींरदेवाँ अमृणदयास्यः ।
मासेव सूर्यो वसु पुर्यमा ददे　गृणानः शत्रूँरशृणाद्विरुक्मता　४　२७९५
अयुद्धसेनो विभ्वा विभिंदुता　दाशद् वृत्रहा तुज्यानि तेजते ।
इंद्रस्य वज्रादबिभेदभिश्नथः　प्राक्रामच्छुन्ध्यूरजंहादुषा अनः　५
एता त्या ते श्रुत्यानि केवला　यदेक एकमकृणोरयज्ञम् ।
मासां विधानमदधा अधि द्यवि　त्वया विभिन्नं भरति प्रधिं पिता　६　२७९७

॥ २५८ ॥ (ऋ० १०।१४४।१-६)
( २७९८-२८०३ ) तार्क्ष्यः सुपर्णः, यामायन ऊर्ध्वकृशनो वा।
गायत्री, २ बृहती, ५ सतोबृहती, ६ विष्टारपङ्क्तिः।

अयं हि ते अमर्त्य　इंदुरत्यो न पत्यते । दक्षो विश्वायुर्वेधसे　१
अयमस्मासु काव्य　ऋभुर्वज्रो दास्वते ।
अयं बिभर्त्यूर्ध्वकृशनं मदं—मृभुर्न कृत्व्यं मदम्　२
घृषुः श्येनाय कृत्वन　आसु स्वासु वंसगः । अव दीधेदहीशुवः　३　२८००
यं सुपर्णः परावतः　श्येनस्य पुत्र आभरत् । शतचक्रं योऽह्यो वर्तनिः　४
यं ते श्येनश्चारुमवृकं पदाभर—दरुणं मानमन्धसः ।
एना वयो वि तार्यायुर्जीवस　एना जागार बंधुता　५
एवा तदिन्द्र इंदुना　देवेषु चिद्धारयाते महि त्यजः ।
क्रत्वा वयो वि तार्यायुः सुक्रतो　क्रत्वायमस्मदा सुतः　६　२८०३

॥ २५९ ॥ ( ऋ० १०।१४७।१-५ )
( २८०४-२८०८ ) सुवेदाः शैरीषिः । जगती, ५ त्रिष्टुप् ।

श्रत् ते दधामि प्रथमाय मन्यवे　ऽहन्यद् वृत्रं नर्यं विवेरपः ।
उभे यत् त्वा भवतो रोदसी अनु　रेजते शुष्मात् पृथिवी चिदद्रिवः　१
त्वं मायाभिरनवद्य मायिनं　श्रवस्यता मनसा वृत्रमर्दयः ।
त्वामिन्नरो वृणते गविष्टिषु　त्वां विश्वासु हव्यास्विष्टिषु　२　२८०५
ऐषु चाकन्धि पुरुहूत सूरिषु　वृधासो ये मघवन्नानशुर्मघम् ।
अर्चन्ति तोके तनये परिष्टिषु　मेधसाता वाजिनमह्रये धने　३
स इन्नु रायः सुभृतस्य चाकन—न्मदं यो अस्य रंह्यं चिकेतति ।
त्वावृधो मघवन् दाश्वध्वरो　मक्षू स वाजं भरते धना नृभिः　४
त्वं शर्धाय महिना गृणान　उरु कृधि मघवञ्छग्धि रायः ।
त्वं नो मित्रो वरुणो न मायी　पित्वो न दस्म दयसे विभक्ता　५　२८०८

॥ २६० ॥ ( ऋ० १०।१४८।१-५ ) ( २८०९-२८१३ ) पृथुर्वैन्यः । त्रिष्टुप् ।

सुष्वाणास इंद्र स्तुमसि त्वा ससवांसश्च तुविनृम्ण वाजम् ।
आ नो भर सुवितं यस्य चाकन् त्मना तना सनुयाम त्वोताः १
ऋष्वस्त्वमिन्द्र शूर जातो दासीर्विशः सूर्येण सह्याः ।
गुहा हितं गुह्यं गूळ्हमप्सु बिभृमसि प्रस्रवणे न सोमम् २ २८१०
अर्यो वा गिरो अभ्यर्च विद्वा— नृषीणां विप्रः सुमतिं चकानः ।
ते स्याम ये रणयन्त सोमै— रेनोत तुभ्यं रथोळ्ह भक्षैः ३
इमा ब्रह्मेन्द्र तुभ्यं शंसि दा नृभ्यो नृणां शूर शवः ।
तेभिर्भव सक्रतुर्येषु चाक— न्नुत त्रायस्व गृणत उत स्तीन् ४
श्रुधी हवमिन्द्र शूर पृथ्या उत स्तवसे वेन्यस्यार्कैः ।
आ यस्ते योनिं घृतवन्तमस्वा— रूर्मिर्न निम्नैर्द्रवयन्त वक्वाः ५ २८१३

॥ २६१ ॥ (ऋ० १०।१५२।१-५) (२८१४-२८१८) शासो भारद्वाजः । अनुष्टुप् ।

शास इत्था महाँ अस्य— मित्रखादो अद्भुतः ।
न यस्य हन्यते सखा न जीयते कदा चन १
स्वस्तिदा विशस्पति— र्वृत्रहा विमृधो वशी ।
वृषेन्द्रः पुर एतु नः सोमपा अभयंकरः २ २८१५
वि रक्षो वि मृधो जहि वि वृत्रस्य हनू रुज ।
वि मन्युमिन्द्र वृत्रह— न्नमित्रस्याभिदासतः ३
वि न इन्द्र मृधो जहि नीचा यच्छ पृतन्यतः ।
यो अस्माँ अभिदास— त्यधरं गमया तमः ४
अपेन्द्र द्विषतो मनो ऽप जिज्यासतो वधम् ।
वि मन्योः शर्म यच्छ वरीयो यवया वधम् ५ २८१८

॥ २६२ ॥ (ऋ० १०।१५३।१-५) (२८१९-२८२३) देवजामय इन्द्रमातरः । गायत्री ।

ईङ्खयन्तीरपस्युव इन्द्रं जातमुपासते । भेजानासः सुवीर्यम् १
त्वमिन्द्र बलादधि सहसो जात ओजसः । त्वं वृषन् वृषेदसि २ २८२०
त्वमिन्द्रासि वृत्रहा व्यन्तरिक्षमतिरः । उद् द्यामस्तभ्ना ओजसा ३
त्वमिन्द्र सजोषस— मर्कं बिभर्षि बाह्वोः । वज्रं शिशान ओजसा ४
त्वमिन्द्राभिभूरसि विश्वा जातान्योजसा । स विश्वा भुव आभवः ५ २८२३

॥ २६३ ॥ (१०।१६०।१-५) (२८२४-२८२८) पूरणो वैश्वामित्रः। त्रिष्टुप्।

तीव्रस्याभिवयसो अस्य पाहि सर्वरथा वि हरी इह मुञ्च।
इन्द्र मा त्वा यजमानासो अन्ये नि रीरमन् तुभ्यमिमे सुतासः १
तुभ्यं सुतास्तुभ्यमु सोत्वास--स्त्वां गिरः श्वात्र्या आ ह्वयन्ति।
इन्द्रेदमद्य सवनं जुषाणो विश्वस्य विद्वाँ इह पाहि सोमम् २ २८२५
य उशता मनसा सोममस्मै सर्वहृदा देवकामः सुनोति।
न गा इन्द्रस्तस्य परा ददाति प्रशस्तमिच्चारुमस्मै कृणोति ३
अनुस्पष्टो भवत्येषो अस्य यो अस्मै रेवान् न सुनोति सोमम्।
निररत्नौ मघवा तं दधाति ब्रह्मद्विषो हन्त्यनानुदिष्टः ४
अश्वायन्तो गव्यन्तो वाजयन्तो हवामहे त्वोपगन्तवा उ।
आभूषन्तस्ते सुमतौ नवायां वयमिन्द्र त्वा शुनं हुवेम ५ २८२८

॥ २६४ ॥ (ऋ० १०।१६७।१-२, ४) (२८२९-२८३१) विश्वामित्र-जमदग्नी। जगती।

तुभ्येदमिन्द्र परि षिच्यते मधु त्वं सुतस्य कलशस्य राजसि।
त्वं रयिं पुरुवीरामु नस्कृधि त्वं तपः परितप्याजयः स्वः १
स्वर्जितं महि मन्दानमन्धसो हवामहे परि शक्रं सुताँ उप।
इमं नो यज्ञमिह बोध्या गहि स्पृधो जयन्तं मघवानमीमहे २ २८३०
प्रसूतो भक्षमकरं चरावपि स्तोमं चेमं प्रथमः सूरिरुन्मृजे।
सुते सातेन यद्यागमं वां प्रति विश्वामित्रजमदग्नी दमे ४ २८३१

॥ २६५ ॥ (ऋ० १०।१७१।१-४) (२८३२-२८३५) इटो भार्गवः। गायत्री।

त्वं त्यमिटतो रथ--मिन्द्र प्रावः सुतावतः। अशृणोः सोमिनो हवम् १
त्वं मखस्य दोधतः शिरोऽव त्वचो भरः। अगच्छः सोमिनो गृहम् २
त्वं त्यमिंद्र मर्त्य--मास्त्रबुध्नाय वेन्यम्। मुहुः श्रथ्ना मनस्यवे ३
त्वं त्यमिंद्र सूर्यं पश्चा संतं पुरस्कृधि। देवानां चित् तिरो वशम् ४ २८३५

॥ २६६ ॥ (ऋ० १०।१७९।१-३)

(२८३६-२८३८) क्रमेण शिबिरौशीनरः, काशिराजः प्रतर्दनः, रौहिदश्वो वसुमनाः। त्रिष्टुप्, १ अनुष्टुप्।

उत् तिष्ठतावं पश्यते--न्द्रस्य भागमृत्वियम्।
यदि श्रातो जुहोतन यद्यश्रातो ममत्तन १
श्रातं हविरो ष्विंद्र प्र याहि जगाम सूरो अध्वनो विमध्यम्।
परि त्वासते निधिभिः सखायः कुलपा न व्राजपतिं चरंतम् २

श्रातं मन्य ऊधनि श्रातमग्नौ सुश्रातं मन्ये तदृतं नवीयः ।
माध्यंदिनस्य सवनस्य दध्नः पिबेन्द्र वज्रिन् पुरुकृज्जुषाणः ३ १८३८

॥ २६७ ॥ (ऋ० १०।१८०।१-३) (१८३९-१८४१) जय ऐन्द्रः । त्रिष्टुप् ।

प्र ससाहिषे पुरुहूत शत्रू ञ्ज्येष्ठस्ते शुष्म इह रातिरस्तु ।
इंद्रा भर दक्षिणेना वसूनि पतिः सिन्धूनामसि रेवतीनाम् १
मृगो न भीमः कुचरो गिरिष्ठाः परावत आ जगन्था परस्याः ।
सृकं संशाय पविमिन्द्र तिग्मं वि शत्रून् ताळ्हि वि मृधो नुदस्व २ १८४०
इंद्र क्षत्रमभि वाममोजो ऽजायथा वृषभ चर्षणीनाम् ।
अपानुदो जनममित्रयन्त मुरुं देवेभ्यो अकृणोरु लोकम् ३ १८४१

॥ २६८ ॥ (ऋ० १०।४७।१-८) (१८४२-१८४९) सप्तगुरांगिरस. । [ वैकुण्ठ इंद्रः ] ।

जगृभ्मा ते दक्षिणमिंद्र हस्तं वसूयवो वसुपते वसूनाम् ।
विद्मा हि त्वा गोपतिं शूर गोना मस्मभ्यं चित्रं वृषणं रयिं दाः १
स्वायुधं स्ववसं सुनीथं चतुःसमुद्रं धरुणं रयीणाम् ।
चर्कृत्यं शंस्यं भूरिवार मस्मभ्यं चित्रं वृषणं रयिं दाः २
सुब्रह्माणं देववन्तं बृहन्त मुरुं गभीरं पृथुबुध्नमिन्द्र ।
श्रुतऋषिमुग्रमभिमातिषाह मस्मभ्यं चित्रं वृषणं रयिं दाः ३
सनद्वाजं विप्रवीरं तरुत्रं धनस्पृतं शूशुवांसं सुदक्षम् ।
दस्युहनं पूर्भिदमिन्द्र सत्य मस्मभ्यं चित्रं वृषणं रयिं दाः ४ १८४५
अश्वावंतं रथिनं वीरवन्तं सहस्रिणं शतिनं वाजमिन्द्र ।
भद्रव्रातं विप्रवीरं स्वर्षा मस्मभ्यं चित्रं वृषणं रयिं दाः ५
प्र सप्तगुमृतधीतिं सुमेधां बृहस्पतिं मतिरच्छा जिगाति ।
य आङ्गिरसो नमसोपसद्यो ऽस्मभ्यं चित्रं वृषणं रयिं दाः ६
वनीवानो मम दूतास इंद्रं स्तोमाश्चरन्ति सुमतीरियानाः ।
हृदिस्पृशो मनसा वच्यमाना अस्मभ्यं चित्रं वृषणं रयिं दाः ७
यत् त्वा यामि दद्धि तन्न इंद्र बृहन्तं क्षयमसमं जनानाम् ।
अभि तद् द्यावापृथिवी गृणीता मस्मभ्यं चित्रं वृषणं रयिं दाः ८ १८४९

॥ २६९ ॥ ( ऋ० १०।११९।१-१३ )
( १८५०-१८६२ ) ऐन्द्रो लबः । [ आत्मा ( इन्द्रः ) ] । गायत्री ।

इति वा इति मे मनो गामश्वं सनुयामिति । कुवित सोमस्यापामिति १ १८५०

प्र वाता इव दोधत उन्मा पीता अयंसत । कुवित् सोमस्यापामिति २
उन्मा पीता अयंसत रथमश्वा इवाशवः । कुवित् सोमस्यापामिति ३
उप मा मतिरस्थित वाश्रा पुत्रमिव प्रियम् । कुवित् सोमस्यापामिति ४
अहं तष्टेव वन्धुरं पर्यचामि हृदा मतिम् । कुवित सोमस्यापामिति ५
नहि मे अक्षिपच्चना—ऽच्छान्त्सुः पञ्च कृष्टयः । कुवित् सोमस्यापामिति ६ २८५५
नहि मे रोदसी उभे अन्यं पक्षं चन प्रति । कुवित सोमस्यापामिति ७
अभि द्यां महिना भुव—मभीऽमां पृथिवीं महीम् । कुवित् सोमस्यापामिति ८
हन्ताहं पृथिवीमिमां नि दधानीह वेह वा । कुवित सोमस्यापामिति ९
ओषमित् पृथिवीमहं जङ्घनानीह वेह वा । कुवित् सोमस्यापामिति १०
दिवि मे अन्यः पक्षोऽ ऽधो अन्यमचीकृषम् । कुवित् सोमस्यापामिति ११ २८६०
अहमस्मि महामहो ऽभिनभ्यमुदीषितः । कुवित् सोमस्यापामिति १२
गृहो याम्यरंकृतो देवेभ्यो हव्यवाहनः । कुवित् सोमस्यापामिति १३ २८६२

॥ २७० ॥ ( अथर्व० २।५।१-४ )

(२८६३-२८६६) भृगुराथर्वणः। १ उपरिष्टान्निचृद्बृहती, २ उपरिष्टाद् विराड्बृहती, ३ विराट्पथ्या बृहती, ४ जगती पुरोविराट् ।

इंद्र जुषस्व प्र वहा याहि शूर हरिभ्याम् ।
पिबा सुतस्य मतेरिह मधोश्चकानश्चारुर्मदाय १
इंद्र जठरं नव्यो न पृणस्व मधोर्दिवो न ।
अस्य सुतस्य स्व१र्णोप त्वा मदाः सुवाचो अगुः २
इंद्रस्तुराषाण्मित्रो वृत्रं यो जघान यतीर्न ।
बिभेद वलं भृगुर्न ससहे शत्रून्मदे सोमस्य ३ २८६५
आ त्वा विशन्तु सुतास इंद्र पृणस्व कुक्षी विड्ढि शक्र धियेह्या नः ।
श्रुधी हवं गिरो मे जुषस्वेन्द्र स्वयुग्भिर्मत्स्वेह महे रणाय ४ + २८६६

॥ २७१ ॥ ( अथर्व० ४।२४।१-७ )

( २८६७-२८७३ ) मृगारः । त्रिष्टुप्, १ शाक्करीगर्भा पुरःशाक्करी ।

इंद्रस्य मन्महे शश्वदिदस्य मन्महे वृत्रघ्न स्तोमा उप मेम आगुः ।
यो दाशुषः सुकृतो हवमेति स नो मुञ्चत्वंहसः १
य उग्रीणामुग्रबाहुर्ययु—र्यो दानवानां बलमारुरोज ।
येन जिताः सिंधवो येन गावः स नो मुञ्चत्वंहसः २

---

+ अथर्व० २।५।५-७, ऋ० १।३२।१-३; दै०सं० [इन्द्रः] ७१५-७१७, [ २८६३-६६ ] अश्व० श्रौ०सू०पूर्व० ६।३

यश्चर्षणिप्रो वृषभः स्वर्विद् यस्मै ग्रावाणः प्रवदन्ति नृम्णम् ।
यस्याध्वरः सप्तहोता मदिष्ठः स नो मुञ्चत्वंहसः ३
यस्य वशास ऋषभास उक्षणो यस्मै मीयन्ते स्वरवः स्वर्विदे ।
यस्मै शुक्रः पवते ब्रह्मशुम्भितः स नो मुञ्चत्वंहसः ४ १८७०
यस्य जुष्टिं सोमिनः कामयन्ते यं हवन्त इषुमन्तं गविष्टौ ।
यस्मिन्नर्कः शिश्रिये यस्मिन्नोजः स नो मुञ्चत्वंहसः ५
यः प्रथमः कर्मकृत्याय जज्ञे यस्य वीर्यं प्रथमस्यानुबुद्धम् ।
येनोद्यतो वज्रोऽभ्यायताहिं स नो मुञ्चत्वंहसः ६
यः संग्रामान्नयति सं युधे वशी यः पुष्टानि संसृजति द्वयानि ।
स्तौमीन्द्रं नाथितो जोहवीमि स नो मुञ्चत्वंहसः ७ १८७३

॥ २७२ ॥ (अथर्व० ५।२३।१-१३) (१८७४-१८८६) कण्वः। अनुष्टुप्, १३ विराट् ।

ओते मे द्यावापृथिवी ओता देवी सरस्वती । ओतौ म इंद्रश्चाग्निश्च क्रिमिं जम्भयतामिति १
अस्येंद्र कुमारस्य क्रिमीन्धनपते जहि । हता विश्वा अरातय उग्रेण वचसा मम २ १८७५
यो अक्ष्यौ परिसर्पति यो नासे परिसर्पति । दतां यो मध्यं गच्छति तं क्रिमिं जम्भयामसि ३
सरूपौ द्वौ विरूपौ द्वौ कृष्णौ द्वौ रोहितौ द्वौ । बभ्रुश्च बभ्रुकर्णश्च गृध्रः कोकश्च ते हताः ४
ये क्रिमयः शितिकक्षा ये कृष्णाः शितिबाहवः । ये के च विश्वरूपा—स्तान्क्रिमीन्जम्भयामसि ५
उत्पुरस्तात्सूर्य एति विश्वदृष्टो अदृष्टहा । दृष्टांश्च घ्नन्नदृष्टांश्च सर्वांश्च प्रमृणन्क्रिमीन् + ६
येवाषासः कष्कषास एजत्काः शिपवित्नुकाः । दृष्टश्च हन्यतां क्रिमि—रुतादृष्टश्च हन्यताम् ७ १८८०
हतो येवाषः क्रिमीणां हतो नदनिमोत । सर्वान्नि मष्मषाकरं दृषदा खल्वाँ इव ८
त्रिशीर्षाणं त्रिककुदं क्रिमिं सारङ्गमर्जुनम् । शृणाम्यस्य पृष्टीरपि वृश्चामि यच्छिरः ९
अत्रिवद्वः क्रिमयो हन्मि कण्ववज्जमदग्निवत् । अगस्त्यस्य ब्रह्मणा सं पिनष्म्यहं क्रिमीन् १०
हतो राजा क्रिमीणा—मुतैषां स्थपतिर्हतः । हतो हतमाता क्रिमि—र्हतभ्राता हतस्वसा ११
हतासो अस्य वेशसो हतासः परिवेशसः। अथो ये क्षुल्लका इव सर्वे ते क्रिमयो हताः १२ १८८५
सर्वेषां च क्रिमीणां सर्वासां च क्रिमीणाम्। भिनद्म्यश्मना शिरो दहाम्यग्निना मुखम् १३ १८८६

॥ २७३ ॥ ( अथर्व० ६।३३।१-३ ) ( १८८७-१८८९ ) जाटिकायनः। गायत्री, २ अनुष्टुप् ।

यस्येदमा रजो युज—स्तुजे जना वनं स्वः । इन्द्रस्य रन्त्यं बृहत् १
नाधृष आ दधृषते धृषाणो धृषितः शवः। पुरा यथा व्यथिः श्रव इन्द्रस्य नाधृषे शवः २
स नो ददातु तां रयि—मुरुं पिशङ्गसंदृशम् । इन्द्रः पतिस्तुविष्टमो जनेष्वा ३ १८८९

+ ऋ० १।१९१।८

॥ २७४ ॥ ( अथर्व० ६।६६।१-३ ) ( २८९०-२८९१ ) अथर्वा । अनुष्टुप्, १ त्रिष्टुप् ।

निर्हस्तः शत्रुरभिदासन्नस्तु ये सेनाभिर्युधमायन्त्यस्मान् ।
समर्पयेन्द्र महता वधेन द्रात्वेषामघहारो विविद्धः १ २८९०
आतन्वाना आयच्छन्तो ऽस्यन्तो ये च धावथ ।
निर्हस्ताः शत्रवः स्थने न्द्रो वोऽद्य पराशरीत् २
निर्हस्ताः सन्तु शत्रवो ऽङ्गैषां म्लापयामसि ।
अथैषामिन्द्र वेदांसि शतशो वि भजामहै ३

॥ २७५ ॥ ( अथर्व० ६।६७।१-३ ) अनुष्टुप् ।

परि वर्त्मानि सर्वत इन्द्रः पूषा च सस्रतुः । मुह्यन्त्वद्यामूः सेना अमित्राणां परस्तराम् १
मूढा अमित्राश्चरता शीर्षाण इवाहयः । तेषां वो अग्निमूढाना मिन्द्रो हन्तु वरंवरम् २
ऐषु नह्य वृषाजिनं हरिणस्या भियं कृधि । पराङमित्र एषत्वर्वाची गौरुपेषतु ३ २८९५

॥ २७६ ॥ ( अथर्व० ६।७५।१-३ ) ( २८९६-२८९८ ) कबन्ध । अनुष्टुप्, ३ षट्पदा जगती ।

निरमुं नुद ओकसः सपत्नो यः पृतन्यति । नैर्बाध्येन हविषे न्द्र एनं पराशरीत् १
परमां तं परावत मिन्द्रो नुदतु वृत्रहा । यतो न पुनरायति शश्वतीभ्यः समाभ्यः २
एतु तिस्रः परावत एतु पञ्च जनाँ अति ।
एतु तिस्रोऽति रोचना यतो न पुनरायति शश्वतीभ्यः समाभ्यो यावत्सूर्यो असद्दिवि ३ २८९८

॥ २७७ ॥ ( अथर्व० ६।८२।१-३ ) (२८९९-२९०१) भग । अनुष्टुप् ।

आगच्छत आगतस्य नाम गृह्णाम्यायतः । इन्द्रस्य वृत्रघ्नो वन्वे वासवस्य शतक्रतोः १
येन सूर्यां सावित्री मश्विनोहतुः पथा । तेन मामब्रवीद्भगो जायामा वहतादिति २ २९००
यस्तेऽङ्कुशो वसुदानो बृहन्निन्द्र हिरण्ययः । तेना जनीयते जायां मह्यं धेहि शचीपते ३ २९०१

॥ २७८ ॥ ( अथर्व० ६।९८।१-३ ) (२९०२-२९०४) अथर्वा । त्रिष्टुप्, २ बृहतीगर्भास्तारपङ्क्तिः ।

इन्द्रो जयाति न परा जयाता अधिराजो राजसु राजयातै ।
चर्कृत्य ईड्यो वन्द्यश्चो पसद्यो नमस्यो भवेह १
त्वमिन्द्राधिराजः श्रवस्यु स्त्वं भूरभिभूतिर्जनानाम् ।
त्वं दैवीर्विश इमा वि राजा ऽऽयुष्मत्क्षत्रमजरं ते अस्तु २
प्राच्या दिशस्त्वमिन्द्रासि राजो तोदीच्या दिशो वृत्रहञ्छत्रुहोऽसि ।
यत्र यन्ति स्रोत्यास्तज्जितं ते दक्षिणतो वृषभ एषि हव्यः ३ २९०४

॥ २७९ ॥ ( अथर्व० ७।३१।१ ) (२९०५) भृग्वङ्गिराः । भुरिक् त्रिष्टुप् ।

इन्द्रोतिभिर्बहुलाभिर्नो अद्य यावच्छ्रेष्ठाभिर्मघवञ्छूर जिन्व ।
यो नो द्वेष्ट्यधरः सस्पदीष्ट यमु द्विष्मस्तमु प्राणो जहातु १ २९०५

॥ २८० ॥ (अथर्व० ७।५०।१--३,५,८--९)

(२९०६ २९११) अङ्गिराः (कितववधकामः)। अनुष्टुप्, ३ त्रिष्टुप् ।

यथा वृक्षमशनि--र्विश्वाहा हन्त्यप्रति । एवाहमद्य कितवा--नक्षैर्बध्यासमप्रति १
तुराणामतुराणां विशामवर्जुषीणाम् । समैतु विश्वतो भगो अन्तर्हस्तं कृतं मम २
ईडे अग्निं स्वावसुं नमोभि--रिह प्रसक्तो वि चयत्कृतं नः ।
रथैरिव प्र भरे वाजयद्भिः प्रदक्षिणं मरुतां स्तोममृध्याम् ३ +
अजैषं त्वा संलिखित--मजैषमुत संरुधम् । अविं वृको यथा मथ--देवा मथ्नामि ते कृतम् ५
कृतं मे दक्षिणे हस्ते जयो मे सव्य आहितः ।
गोजिद्भूयासमश्वजि--द्धनंजयो हिरण्यजित् ८ २९१०
अक्षाः फलवतीं द्युवं दत्त गां क्षीरिणीमिव ।
सं मा कृतस्य धारया धनुः स्नाव्नेव नह्यत ९ २९११

॥ २८१ ॥ ( अथर्व० ७।५५।१ ) (२९१२) भृगुः । विराट् परोष्णिक् ।

ये ते पन्थानोऽव दिवो येभिर्विश्वमैरयः । तेभिः सुम्नया धेहि नो वसो १ २९१२

॥ २८२ ॥ ( अथर्व० ७।९३।१ ) (२९१३) भृग्वङ्गिराः । गायत्री ।

इन्द्रेण मन्युना वय--मभि ष्याम पृतन्यतः । घ्नन्तो वृत्राण्यप्रति १ २९१३

॥ २८३ ॥ ( अथर्व० १९।१३।१ ) (२९१४) अप्रतिरथः । त्रिष्टुप् ।

इन्द्रस्य बाहू स्थविरौ वृषाणौ चित्रा इमा वृषभौ पारयिष्णू ।
तौ योक्षे प्रथमो योग आगते याभ्यां जितमसुराणां स्व१र्यत् १ × २९१४

॥ २८४ ॥ ( अथर्व० १९।१५।२-३ ) (२९१५-२९१६) अथर्वा । त्रिष्टुप्, ३ पथ्यापङ्क्ति ।

इन्द्रं वयमनूराधं हवामहे ऽनु राध्यास्म द्विपदा चतुष्पदा ।
मा नः सेना अररुषीरुप गु--र्विषूचीरिन्द्र द्रुहो वि नाशय २ ※ २९१५
इन्द्रस्त्रातोत वृत्रहा परस्फानो वरेण्यः ।
स रक्षिता चरमतः स मध्यतः स पश्चात्स पुरस्तान्नो अस्तु ३ २९१६

॥ २८५ ॥ (अथर्व० २०।२।३) (२९१७) गृत्समदो मेधातिथिर्वा । आर्च्युष्णिक् ।

इन्द्रो ब्रह्मा ब्राह्मणात्सुष्टुभः स्वर्काद्दृतुना सोमं पिबतु ३ २९१७

---

+ अथर्व० ७।५०।४, ६-७, ऋ० १।१०२।४, १०।४२।९-१०, १०।४३-४४।१०, दै० [इन्द्रः] ८३०, २५५४-५५, २५६६, २५७७ ।

× अथर्व० १९।१३।२-७,९-११, ऋ०१०।१०३।१-३,५-११,१३, दै०[इन्द्र] २६९१-२७०१ ।

※ अथर्व० १९।१५।१,४; ऋ० ८।६१।१३, ६।४७।८; दै० [इन्द्रः] ५६०,२१०६ ।

॥ २८६ ॥ ( वा० य० १।४ )

सा विश्वायुः सा विश्वकर्मा सा विश्वधायाः ।
इन्द्रस्य त्वा भागꣳ सोमेनातनच्मि विष्णो हव्यꣳ रक्ष　४　२९१८

॥ २८७ ॥ ( वा० य० ३।४९-५० )

पूर्णा दर्वि परा पत　सुपूर्णा पुनरापत ।
वस्नेव विक्रीणावहा　ऽइषमूर्जꣳ शतक्रतो　४९ +
देहि मे ददामि ते　नि मे धेहि नि ते दधे ।
निहारं च हरासि मे　निहारं निहराणि ते स्वाहा　५०　२९२०

॥ २८८ ॥ ( वा० य० ५।२८,३० )

ध्रुवासि ध्रुवोऽयं यजमानोऽस्मिन्नायतने प्रजया पशुभिर्भूयात ।
घृतेन द्यावापृथिवी पूर्येथामिन्द्रस्य छदिरसि विश्वजनस्य छाया　२८ ×
इन्द्रस्य स्यूरसीन्द्रस्य ध्रुवोऽसि । ऐन्द्रमसि वैश्वदेवमसि　३०　२९२२

॥ २८९ ॥ ( वा० य० ७।४,१४-१५,२५ )

उपयामगृहीतोऽस्यन्तर्यच्छ मघवन् पाहि सोमम् । उरुष्य राय ऽ एषो यजस्व　४
अच्छिन्नस्य ते देव सोम सुवीर्यस्य रायस्पोषस्य ददितारः स्याम ।
सा प्रथमा सꣳस्कृतिर्विश्ववारा स प्रथमो वरुणो मित्रो ऽ अग्निः　१४
स प्रथमो बृहस्पतिश्चिकित्वाँस्तस्मा ऽ इन्द्राय सुतमाजुहोत स्वाहा ।
तृम्पन्तु होत्रा मध्वो याः स्विष्टा याः सुप्रीताः सुहुता यत्स्वाहायाडग्नीत्　१५　२९२५
ध्रुवं ध्रुवेण मनसा　वाचा सोममवनयामि ।
अथा न ऽ इन्द्र इद्विशो　ऽसपत्नाः समनसस्करत　२५ ❀ २९२६

॥ २९० ॥ ( वा० य० ८।३२,३६ )

मही द्यौः पृथिवी च न　इमं यज्ञं मिमिक्षताम् । पिपृतां नो भरीमभिः　३२ ::
यस्मान्न जातः परो ऽ अन्यो ऽ अस्ति　य ऽ आविवेश भुवनानि विश्वा ।
प्रजापतिः प्रजया सꣳरराण—स्त्रीणि ज्योतीꣳषि सचते स षोडशी　३६　२९२८

---

+ वा० य० ३।५१-५२; ऋ० १।८२।२-३; अथर्व० ३।७।१०; १८।४।६१; दै० स० [ इन्द्रः ] ९२६-२७ ।

× वा० य० ५।२९, ऋ० १।१०।१२; दै० स० [ इन्द्र ] ६९ ।

❀ वा० य० ७।२५; ऋ० १०।१७३।६, अथर्व० ७।९४।१ ।

:: वा० य० ८।३३-३५; ऋ० १।१०।३, १।८४।२-३; साम० १०२९-३०, १३४६; दै०सं० [इन्द्र] ६०,९३८-३९ ।

❀

॥ २९१ ॥ ( वा० य० १२।६६ )
निवेशनः संगमनो वसूनां विश्वा रूपाभिचष्टे शचीभिः ।
देव ऽ इव सविता सत्यधर्मेन्द्रो न तस्थौ समरे पथीनाम् ६६ [] २९२९

॥ २९२ ॥ ( वा० य० १३।१४ )
अग्निर्मूर्धा दिवः ककुत् पतिः पृथिव्या ऽ अयम् । अपाᳬ रेताᳬसि जिन्वति १४ + २९३०

॥ २९३ ॥ ( वा० १७।२३,३६,४४-४५,५१,६३ )
वाचस्पतिं विश्वकर्माणमूतये मनोजुवं वाजे ऽ अद्या हुवेम ।
स नो विश्वानि हवनानि जोषद् विश्वशम्भूरवसे साधुकर्मा २३ ×
बृहस्पते परिदीया रथेन रक्षोहामित्राँ२ऽअपबाधमानः ।
प्रभञ्जन्त्सेनाः प्रमृणो युधा जयन्नस्माकमेध्यविता रथानाम् ३६ ⁂
अमीषां चित्तं प्रतिलोभयन्ती गृहाणाङ्गान्यप्वे परेहि ।
अभि प्रेहि निर्दह हृत्सु शोकै रन्धेनामित्रास्तमसा सचन्ताम् ४४
अवसृष्टा परापत शरव्ये ब्रह्मसᳬशिते । गच्छामित्रान्प्रपद्यस्व मामीषां कञ्चनोच्छिषः ४५
इन्द्रेमं प्रतरां नय सजातानामसद्वशी । समेनं वर्चसा सृज देवानां भागदाऽअसत ५१ २९३५
वाजस्य मा प्रसव उद्ग्राभेणोदग्रभीत् । अधा सपत्नानिन्द्रो मे निग्राभेणाधराँ२ अकः ६३ २९३६

॥ २९४ ॥ ( वा० य० १९।३२,८०-९५ )
सुरावन्तं बर्हिषदᳬ सुवीरं यज्ञᳬ हिन्वन्ति महिषा नमोभिः ।
दधानाः सोमं दिवि देवतासु मदेमेन्द्रं यजमानाः स्वर्काः ३२ ::
सीसेन तन्त्रं मनसा मनीषिण ऊर्णासूत्रेण कवयो वयन्ति ।
अश्विना यज्ञᳬ सविता सरस्वतीन्द्रस्य रूपं वरुणो भिषज्यन् ८०
तदस्य रूपममृतᳬ शचीभिस्तिस्रो दधुर्देवताः सᳬरराणाः ।
लोमानि शष्पैर्बहुधा न तोक्मभिस्त्वगस्य मांसमभवन्न लाजाः ८१
तदश्विना भिषजा रुद्रवर्तनी सरस्वती वयति पेशो ऽ अन्तरम् ।
अस्थि मज्जानं मासरैः कारोतरेण दधतो गवां त्वचि ८२ २९४०

[] ऋ० १०।१३९।३ अथर्व० १०।८।४२
+ ऋ० ८।४४।१६, साम० २७,१५३२, दै० स० [अग्नि.] १३५८ ।
× ऋ० १०।८१।७
⁂ वा० य० १७।३३-४५,५१,६३; ऋ० १०।१०३।१-१२, ६।७५।१६, साम०१८४९-१८६१,१८६३; अथर्व०३।१।५, १९।१३।८, ३।५।२, ६।३७।३, ८।५।२, १९।१३।२-११, दै० स० [इन्द्रः] २६९२-२७०१ ।
:: वा० य० १९।७१; ऋ० ८।१४।१३; साम० २११, अथर्व० २०।२९।३; दै० सं० [इन्द्रः] ३६६ ।

सरस्वती मनसा पेशलं वसु नासत्याभ्यां वयति दर्शतं वपुः।
रसं परिस्रुता न रोहितं नग्नहुर्धीरस्तसरं न वेम ८३
पयसा शुक्रममृतं जनित्रꣳ सुरया मूत्राज्जनयन्त रेतः।
अपामतिं दुर्मतिं बाधमाना ऊवध्यं वातꣳ सब्वं तदारात् ८४
इन्द्रः सुत्रामा हृदयेन सत्यं पुरोडाशेन सविता जजान।
यकृत् क्लोमानं वरुणो भिषज्यन् मतस्ने वायव्यैर्न मिनाति पित्तम् ८५
आन्त्राणि स्थालीर्मधु पिन्वमाना गुदाः पात्राणि सुदुघा न धेनुः।
श्येनस्य पत्रं न प्लीहा शचीभि॒रासन्दी नाभिरुदरं न माता ८६
कुम्भो वनिष्ठुर्जनिता शचीभि॒र्यस्मिन्नग्रे योन्यां गर्भो ऽ अन्तः।
प्लाशिर्व्यक्तः शतधार ऽ उत्सो दुहे न कुम्भी स्वधां पितृभ्यः ८७ २९४५
मुखꣳ सदस्य शिर ऽ इत सतेन जिह्वा पवित्रमश्विनासन्त्सरस्वती।
चप्यं न पायुर्भिषगस्य वालो वस्तिर्न शेपो हरसा तरस्वी ८८
अश्विभ्यां चक्षुरमृतं ग्रहाभ्यां छागेन तेजो हविषा शृतेन।
पक्ष्माणि गोधूमैः कुवलैरुतानि पेशो न शुक्रमसितं वसाते ८९
अविर्न मेषो नसि वीर्याय प्राणस्य पन्था ऽ अमृतो ग्रहाभ्याम्।
सरस्वत्युपवाकैर्व्यानं नस्यानि बर्हिर्बदरैर्जजान ९०
इन्द्रस्य रूपमृषभो बलाय कर्णाभ्याꣳ श्रोत्रममृतं ग्रहाभ्याम्।
यवा न बर्हिर्भ्रुवि केसराणि कर्कन्धु जज्ञे मधु सारघं मुखात् ९१
आत्मन्नुपस्थे न वृकस्य लोम मुखे श्मश्रूणि न व्याघ्रलोम।
केशा न शीर्षन्यशसे श्रियै शिखा सिꣳहस्य लोम त्विषिरिन्द्रियाणि ९२ २९५०
अङ्गान्यात्मन् भिषजा तदश्विना॒त्मानमङ्गैः समधात् सरस्वती।
इन्द्रस्य रूपꣳ शतमानमायु॒श्चन्द्रेण ज्योतिरमृतं दधानाः ९३
सरस्वती योन्यां गर्भमन्त॒रश्विभ्यां पत्नी सुकृतं बिभर्ति।
अपाꣳ रसेन वरुणो न साम्ने॒न्द्रꣳ श्रियै जनयन्नप्सु राजा ९४
तेजः पशूनाꣳ हविरिन्द्रियावत् परिस्रुता पयसा सारघं मधु।
अश्विभ्यां दुग्धं भिषजा सरस्वत्या सुतासुताभ्याममृतः सोम ऽ इन्दुः ९५ २९५३

॥२९५॥ (वा० य० २०।३१, ७१-७७, ८०, ९०)

अध्वर्यो ऽ अद्रिभिः सुतꣳ सोमं पवित्र ऽ आ नय। पुनाहीन्द्राय पातवे ३१ +

+ वा० य० २०।२९; ऋ० ३।५२।१, ८।९१।२, सा० २१०, दे० स० [इन्द्रः] १४४६

सविता वरुणो दधद् यजमानाय दाशुषे । आदत्त नमुचेर्वसु सुत्रामा बलमिन्द्रियम् ७१ १९५५
वरुणः क्षत्रमिन्द्रियं भगेन सविता श्रियम् । सुत्रामा यशसा बलं दधाना यज्ञमाशत ७२
अश्विना गोभिरिन्द्रिय मश्वेभिर्वीर्यं बलम् । हविषेन्द्रꣳ सरस्वती यजमानमवर्धयन् ७३
ता नासत्या सुपेशसा हिरण्यवर्तनी नरा । सरस्वती हविष्मती न्द्र कर्मसु नोऽवत ७४
ता भिषजा सुकर्मणा सा सुदुघा सरस्वती । स वृत्रहा शतक्रतु रिन्द्राय दधुरिन्द्रियम् ७५
युवꣳ सुराममश्विना नमुचावासुरे सचा । विपिपानाः सरस्वती न्द्रं कर्मस्वावत ७६ ❀ १९६०
पुत्रमिव पितरावश्विनो भेन्द्रावथुः काव्यैर्दꣳ सनाभिः ।
यत्सुरामं व्यपिबः शचीभिः सरस्वती त्वा मघवन्नभिष्णक् ७७
अश्विना तेजसा चक्षुः प्राणेन सरस्वती वीर्यम् । वाचेन्द्रो बलेने न्द्राय दधुरिन्द्रियम् ८०
अश्विना पिबतां मधु सरस्वत्या सजोषसा ।
इंद्रः सुत्रामा वृत्रहा जुषन्ताꣳ सोम्यं मधु ९० । १९६३

॥ २९६ ॥ ( वा० य० २६।४-५, १० )

इंद्र गोमन्निहा याहि पिबा सोमꣳ शतक्रतो । विद्यद्भिर्ग्रावभिः सुतम् ४
इंद्रा याहि वृत्रहन् पिबा सोमꣳ शतक्रतो । गोमद्भिर्ग्रावभिः सुतम् ५ १९६५
महाँ२ ऽ इंद्रो वज्रहस्तः षोडशी शर्म यच्छतु । हन्तु पाप्मानं योऽस्मान् द्वेष्टि १० § १९६६

॥ २९७ ॥ ( वा० य० २९।५७ )

आमूरज प्रत्यावर्तयेमाः केतुमद्दुन्दुभिर्वावदीति ।
समश्वपर्णाश्चरन्ति नो नरो ऽस्माकमिन्द्र रथिनो जयन्तु ५७ ‡ १९६७

॥ २९८ ॥ ( वा० य० ३३।२७, ७८-७९, ९० )

कुतस्त्वमिन्द्र माहिनः सन्नेको यासि सत्पते किं त ऽ इत्था ।
सं पृच्छसे समराणः शुभानैर्वोचेस्तन्नो हरिवो यत्ते ऽ अस्मे २७ $
ब्रह्माणि मे मतयः शꣳ सुतासः शुष्म ऽ इयर्ति प्रभृतो मे ऽ अद्रिः ।
आ शासते प्रति हर्यन्त्युक्थेमा हरी वहतस्ता नो ऽ अच्छ ७८

❀ वा० य० २०।७६ ७७, ऋ० १०।१३१।४-५; अथर्व० २०।१२५।४-५ ।

। वा० य० २०।८७-८९, ऋ० १।३।४-६, साम० ११४६-४८, अथर्व० २०।८४।१-३, दै० सं० [ इन्द्र. ] १-३ ।

§ वा० य० २६।११।२३, ऋ० ८।८८।१, ३।३५।६; साम० २३६, ६८५, अथर्व० २०।९।१; ४९।४, दै० सं० [इन्द्र:] ८९४, १३१७ ।

‡ वा० य० २९।५७, ऋ० ६।४७।३१; अथर्व० ६।१२५।६ ।

$ वा० य० ३३।१८।२९; ऋ० १।९।१; १०२।१, १६५।३-४, ९; ३।३४।३; ३८,४, ७।२३।४;६६।४, ८।४५।१; ८।७२।१२-१३, १०।५९।१, ७४।४; साम० ११७, १८०, १३३९, १३५१, १४८०, १६०२; अथर्व० ४।८।३, ७ २३।४, २०।१।१।२, ७१।७; दै०सं० [इन्द्र:] ११८३; १३४८,२६०१,४४४,४८,१३०३,८१८,२६३७; दै०सं० [अग्नि ]१४३५-३६

अनुत्तमा ते मघवन्नकिर्नु न त्वावाँ२ ऽ अस्ति देवता विदानः ।
न जायमानो नशते न जातो यानि करिष्या कृणुहि प्रवृद्ध ७९ २९७०
चन्द्रमा ऽ अप्स्वन्तरा सुपर्णो धावते दिवि ।
रयिं पिशङ्गं बहुलं पुरुस्पृहꣳ हरिरेति कनिक्रदत् ९० २९७१

॥ २९९ ॥ ( वा० य० ३५।१८ )

परीमे गामनेषत पर्यग्निमहृषत । देवेष्वक्रत श्रवः क ऽ इमाँ२ ऽ आ दधर्षति १८ × २९७२

॥ ३०० ॥ ( वा० य० ३६।८ )

इन्द्रो विश्वस्य राजति । शं नो ऽ अस्तु द्विपदे शं चतुष्पदे ८ २९७३

॥ ३०१ ॥ ( वा० य० ३८।२६ )

यावती द्यावापृथिवी यावच्च सप्त सिन्धवो वितस्थिरे ।
तावन्तमिन्द्र ते ग्रहं—मूर्जा गृह्णाम्यक्षितं मयि गृह्णाम्यक्षितम् २६ * २९७४

॥ ३०२ ॥ ( साम० १९० )

२ ३ १ २र ३ २उ ३ १ २ २ ३ १ ३ १ २
क इमं नाहुषीष्वा इन्द्रं सोमस्य तर्पयात् । स नो वसून्या भरात् १९० २९७५

॥ ३०३ ॥ ( साम० १९६ )

१ २ ३ २ ३ १ २ ३२उ ३ १ २र ३२ २ ३ २ ३२उ ३ १ २
सदा व इन्द्रश्चर्कृषदा उपो नु स सपर्यन् । न देवो वृतः शूर इन्द्रः १९६ २९७६

॥ ३०४ ॥ ( साम० २०९, २१२ )

१२ २ १ २ ३ १ २ ३ १२ १२ ३ १२
अरं त इन्द्र श्रवसे गमेम शूर त्वावतः । अरं शक्र परमाणि २०९ २९७७
३१ २ ३ १ २ ३ २ ३ २ ३ १ २ १ २
इमे त इन्द्र सोमाः सुतासो ये च सोत्वाः । तेषां मत्स्व प्रभूवसो २१२ २९७८

॥ ३०५ ॥ ( साम० २२६, २३१ )

१ २ ३२ ३ १ २ ३ १ २ ३ १ २ १ २ ३ २ ३ १ २
इन्द्र उक्थेभिर्मन्दिष्ठो वाजानां च वाजपतिः । हरिवान्त्सुतानां सखा २२६
१ २ ३ १ २र ३ २ ३ १ २ १ २ ३ १ २
एन्द्र पृक्षु कासु चि—न्नृम्णं तनूषु धेहि नः । सत्राजिदुग्र पौंस्यम् २३१ २९८०

॥ ३०६ ॥ ( साम० २९४, २९८ )

३ १ २ ३ १ २ ३ १ २ ३ १ २
इम इन्द्र मदाय ते सोमाश्चिकित्र उक्थिनः ।
१ २ ३१ २र ३ १ २ ३ १ २ ३ १ २
मधोः पपान उप नो गिरः शृणु रास्व स्तोत्राय गिर्वणः २९४

---

‖ वा० य० ३३।५९, ६३-६७, ९५-९६; ऋ० ३।३१।६; ४७४, ४।३२।१, ८।८९।२-३; ९९।५-६, साम० १८१, २५७, ३११, १६३७-३८, दै० सं० [इन्द्रः] १२६५, १४१७, १६४५, २३८०-८१, २३८५-८६, २६१३ ।

× वा० य० ३५।१८, ऋ० १०।१५५।५; अथर्व० ६.२८।२ ।

× वा० य० ३६।४-७, ऋ० ४।३१।१-३, ८।९३।१९; साम० १६९, ६८२-८४; १५८६; अथर्व० २०।१२४।१-३, दै० सं० [इन्द्रः] १६३०-३२, २४४८ ।

* वा० य० ३८।२६, अथर्व० ४।६।२

यदिन्द्र शासो अव्रतं च्यावया सदसस्परि ।
अस्माकमंशुं मघवन् पुरुस्पृहं वसव्ये अधि बर्हय २९८ २९८१

॥ ३०७ ॥ ( साम० ३२७ )

मेडिं न त्वा वज्रिणं भृष्टिमन्तं पुरुधस्मानं वृषभं स्थिरप्स्नुम् ।
करोष्यर्यस्तरुषीर्दुवस्यु—रिन्द्र द्युक्षं वृत्रहणं गृणीषे ३२७ २९८३

॥ ३०८ ॥ ( साम० ३३६,३३७ )

यो नो वनुष्यन्नभिदाति मर्त उगणा वा मन्यमानस्तुरो वा ।
क्षिधी युधा शवसा वा तमिन्द्रा—भी ष्याम वृषमणस्त्वोताः ३३६
यं वृत्रेषु क्षितिय स्पर्धमाना यं युक्तेषु तुरयन्तो हवन्ते ।
यं शूरसातौ यमपामुपज्म—न्यं विप्रासो वाजयन्त स इन्द्रः ३३७ २९८५

॥ ३०९ ॥ ( साम० ४३८,१७६८,४४४-४४६,११११-१५ )

एष ब्रह्मा य ऋत्विय इन्द्रो नाम श्रुतो गृणे ४३८
उप प्रक्षे मधुमति क्षियन्तः पुष्येम रयिं धीमहे त इन्द्र ४४४
अर्चन्त्यर्कं मरुतः स्वर्का आ स्तोभति श्रुतो युवा स इन्द्रः ४४५
प्र व इन्द्राय वृत्रहन्तमाय विप्राय गाथं गायत यं जुजोषते ४४६ २९८९

॥ ३१० ॥ ( साम० ४४९, ४५३, ४५६, १७७० )

भगो न चित्रो अग्नि—र्महोनां दधाति रत्नम् ४४९ २९९०
वि स्रुतयो यथा पथा इन्द्र त्वद्यन्तु रातयः ४५३
इन्द्रो विश्वस्य राजति ४५६ २९९१

॥ ३११ ॥ ( साम० ५८८ )

यस्येदमा रजोयुज—स्तुजे जने वनं स्वः । इन्द्रस्य रन्त्यं बृहत् ५८८ २९९३

॥ ३१२ ॥ ( साम० ६२३-६२५ )

हरी त इन्द्र श्मश्रू—ण्युतो ते हरितौ हरी ।
तं त्वा स्तुवन्ति कवयः पुरुषासो वनर्गवः ६२३

यद्वर्चो हिरण्यस्य यद्वा वर्चो गवामुत।
सत्यस्य ब्रह्मणो वर्च—स्तेन मा संसृजामसि ६२४
सहस्तन्न इन्द्र दद्ध्योज ईशे ह्यस्य महतो विरप्शिन्।
क्रतुं न नृम्णं स्थविरं च वाजं वृत्रेषु शत्रून्त्सहना कृधी नः ६२५ २९९६

॥ ३१३ ॥ ( साम० ९५२-९५४ )

इन्द्र जुषस्व प्र वहा याहि शूर हरिह।
पिबा सुतस्य मतिर्न मधोश्चकानश्चारुर्मदाय ९५२ २९९७
इन्द्र जठरं नव्यं न पृणस्व मधोर्दिवो न।
अस्य सुतस्य स्वा३र्नोप त्वा मदाः सुवाचो अस्थुः ९५३
इन्द्रस्तुरापाण्मित्रो न जघान वृत्रं यतिर्न।
बिभेद वलं भृगुर्न ससाहे शत्रून्मदे सोमस्य ९५४ २९९९

॥ ३१४ ॥ ( साम० १८६९ )

इन्द्रस्य बाहू स्थविरौ युवाना—वनाधृष्यौ सुप्रतीकावसह्यौ।
तौ युञ्जीत प्रथमौ योग आगते याभ्यां जितमसुराणां सहो महत् १८६९ ३०००

॥ ३१५ ॥ ( साम० १८७१ )

अन्धा अमित्रा भवता—शीर्षाणोऽहय इव।
तेषां वो अग्निनुन्नाना—मिन्द्रो हन्तु वरंवरम् १८७१ ३००१

इन्द्रसहचारी-देवगणः।

## ( १ ) इन्द्राग्नी।

॥ ३१६ ॥ ( ऋ० १।२१।१-६ )

( ३००२-३००७ ) मेधातिथिः काण्वः। गायत्री।

इहेन्द्राग्नी उप ह्वये तयोरित् स्तोममुश्मसि। ता सोमं सोमपातमा १
ता यज्ञेषु प्र शंसते—न्द्राग्नी शुम्भता नरः। ता गायत्रेषु गायत २
ता मित्रस्य प्रशस्तय इन्द्राग्नी ता हवामहे। सोमपा सोमपीतये ३
उग्रा सन्ता हवामह उपेदं सवनं सुतम्। इन्द्राग्नी एह गच्छताम् ४ ३००५
ता महान्ता सदस्पती इन्द्राग्नी रक्ष उब्जतम्। अप्रजाः सन्त्वत्रिणः ५
तेन सत्येन जागृत—मधि प्रचेतुने पदे। इन्द्राग्नी शर्म यच्छतम् ६ ३००७

॥ ३१६ ॥ (ऋ० १।१०८।१-१३)

( ३००८-३०२० ) कुत्स आंगिरसः । त्रिष्टुप् ।

य इन्द्राग्नी चित्रतमो रथो वा—मभि विश्वानि भुवनानि चष्टे ।
तेना यातं सरथं तस्थिवांसा—था सोमस्य पिबतं सुतस्य १
यावदिदं भुवनं विश्वम—स्त्युरुव्यचा वरिमता गभीरम् ।
तावाँ अयं पातवे सोमो अ—स्त्वरमिन्द्राग्नी मनसे युवभ्याम् २
चक्राथे हि सध्र्यङ्नाम भद्रं सध्रीचीना वृत्रहणा उत स्थः ।
ताविन्द्राग्नी सध्र्यञ्चा निषद्या वृष्णः सोमस्य वृषणा वृषेथाम् ३ ३०१०
समिद्धेष्वग्निष्वानजाना यतस्रुचा बर्हिरु तिस्तिराणा ।
तीव्रैः सोमैः परिषिक्तेभिरर्वा—गेन्द्राग्नी सौमनसाय यातम् ४
यानीन्द्राग्नी चक्रथुर्वीर्याणि यानि रूपाण्युत वृष्ण्यानि ।
या वां प्रत्नानि सख्या शिवानि तेभिः सोमस्य पिबतं सुतस्य ५
यदब्रवं प्रथमं वां वृणानो३ ऽयं सोमो असुरैर्नो विहव्यः ।
तां सत्यां श्रद्धामभ्या हि यात—मथा सोमस्य पिबतं सुतस्य ६
यदिन्द्राग्नी मदथः स्वे दुरोणे यद् ब्रह्मणि राजनि वा यजत्रा ।
अतः परि वृषणावा हि यात—मथा सोमस्य पिबतं सुतस्य ७
यदिन्द्राग्नी यदुषु तुर्वशेषु यद् द्रुह्युष्वनुषु पूरुषु स्थः ।
अतः परि वृषणावा हि यात—मथा सोमस्य पिबतं सुतस्य ८ ३०१५
यदिन्द्राग्नी अवमस्यां पृथिव्यां मध्यमस्यां परमस्यामुत स्थः
अतः परि वृषणावा हि यात—मथा सोमस्य पिबतं सुतस्य ९
यदिन्द्राग्नी परमस्यां पृथिव्यां मध्यमस्यामवमस्यामुत स्थः ।
अतः परि वृषणावा हि यात—मथा सोमस्य पिबतं सुतस्य १०
यदिन्द्राग्नी दिवि ष्ठो यत् पृथिव्यां यत् पर्वतेष्वोषधीष्वप्सु ।
अतः परि वृषणावा हि यात—मथा सोमस्य पिबतं सुतस्य ११
यदिन्द्राग्नी उदिता सूर्यस्य मध्ये दिवः स्वधया मादयेथे ।
अतः परि वृषणावा हि यात—मथा सोमस्य पिबतं सुतस्य १२
एवेन्द्राग्नी पपिवांसा सुतस्य विश्वास्मभ्यं सं जयतं धनानि ।
तन्नो मित्रो वरुणो मामहन्ता—मदितिः सिंधुः पृथिवी उत द्यौः १३ ३०२०

॥ ३१८ ॥ ( ऋ० १।१०९।१-८ )

वि ह्यख्यं मनसा वस्य इच्छन्निन्द्राग्नी ज्ञास उत वा सजातान् ।
नान्या युवत् प्रमतिरस्ति मह्यं स वां धियं वाजयन्तीमतक्षम् १
अश्रवं हि भूरिदावत्तरा वां विजामातुरुत वा घा स्यालात् ।
अथा सोमस्य प्रयती युवभ्यामिन्द्राग्नी स्तोमं जनयामि नव्यम् २
मा च्छेद्म रश्मीँरिति नाधमानाः पितॄणां शक्तीरनुयच्छमानाः ।
इन्द्राग्निभ्यां कं वृषणो मदन्ति ता ह्यद्री धिषणाया उपस्थे ३
युवाभ्यां देवी धिषणा मदायेन्द्राग्नी सोममुशती सुनोति ।
तावश्विना भद्रहस्ता सुपाणी आ धावतं मधुना पृङ्क्तमप्सु ४
युवामिन्द्राग्नी वसुनो विभागे तवस्तमा शुश्रव वृत्रहत्ये ।
तावासद्या बर्हिषि यज्ञे अस्मिन् प्र चर्षणी मादयेथां सुतस्य ५ ३०२५
प्र चर्षणिभ्यः पृतनाहवेषु प्र पृथिव्या रिरिचाथे दिवश्च ।
प्र सिन्धुभ्यः प्र गिरिभ्यो महित्वा प्रेन्द्राग्नी विश्वा भुवनात्यन्या ६
आ भरतं शिक्षतं वज्रबाहू अस्माँ इन्द्राग्नी अवतं शचीभिः ।
इमे नु ते रश्मयः सूर्यस्य येभिः सपित्वं पितरो न आसन् ७
पुरंदरा शिक्षतं वज्रहस्तास्माँ इन्द्राग्नी अवतं भरेषु ।
तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ८ ३०२८

॥ ३१९ ॥ ( ऋ० १।१३९।९ ) (३०२९) परुच्छेपो दैवोदासिः । अत्यष्टिः ।

दध्यङ् ह मे जनुषं पूर्वो अङ्गिराः प्रियमेधः कण्वो अत्रिर्मनुर्विदुस्ते मे पूर्वे मनुर्विदुः ।
तेषां देवेष्वायतिरस्माकं तेषु नाभयः। तेषां पदेन मह्या नमे गिरेन्द्राग्नी आ नमे गिरा ९,३०२९

॥ ३२० ॥ ( ऋ० ३।१२।१-९ ) ( ३०३०-३०३८ ) गाथिनो विश्वामित्रः । गायत्री ।

इन्द्राग्नी आ गतं सुतं गीर्भिर्नभो वरेण्यम् । अस्य पातं धियेषिता १ ३०३०
इन्द्राग्नी जरितुः सचा यज्ञो जिगाति चेतनः । अया पातमिमं सुतम् २
इन्द्रमग्निं कविच्छदा यज्ञस्य जूत्या वृणे । ता सोमस्येह तृम्पताम् ३
तोशा वृत्रहणा हुवे सजित्वानापराजिता । इन्द्राग्नी वाजसातमा ४
प्र वामर्चन्त्युक्थिनो नीथाविदो जरितारः । इन्द्राग्नी इष आ वृणे ५
इन्द्राग्नी नवतिं पुरो दासपत्नीरधूनुतम् । साकमेकेन कर्मणा ६ ३०३५
इन्द्राग्नी अपसस्पर्युप प्र यन्ति धीतयः । ऋतस्य पथ्या३ अनु ७
इन्द्राग्नी तविषाणि वां सधस्थानि प्रयांसि च । युवोरप्तूर्यं हितम् ८

❀

इन्द्राग्नी रोचना दिवः परि वाजेषु भूषथः । तद् वां चेति प्र वीर्यम् ९ ३०३८

॥ ३२१ ॥ ( ऋ० ५।२७।६ )

(३०३९) त्रैवृष्णस्त्र्यरुणः, पौरुकुत्सस्त्रसदस्युः, भारतोऽश्वमेधश्च राजानः(अत्रिर्भौम इति केचित्)। अनुष्टुप्।

इन्द्राग्नी शतदाव्न्य—श्वमेधे सुवीर्यम् । क्षत्रं धारयतं बृहद् दिवि सूर्यमिवाजरम् ६ ३०३९

॥ ३२२ ॥ ( ऋ० ५।८६।१-६ ) (३०४०-३०४५) भौमोऽत्रिः । अनुष्टुप्, ६ विराट्पूर्वा ।

इन्द्राग्नी यमवथ उभा वाजेषु मर्त्यम् । दृळ्हा चित् स प्र भेदति द्युम्ना वाणीरिव त्रितः १ ३०४०
या पृतनासु दुष्टरा या वाजेषु श्रवाय्या । या पञ्च चर्षणीरभी—न्द्राग्नी ता हवामहे २
तयोरिदमवच्छव—स्तिग्मा दिद्युन्मघोनोः । प्रति द्रुणा गभस्त्यो—र्गवां वृत्रघ्न एषते ३
ता वामेषे रथाना—मिन्द्राग्नी हवामहे । पती तुरस्य राधसो विद्वांसा गिर्वणस्तमा ४
ता वृधन्तावनु द्यून् मर्ताय देवावदभा । अर्हन्ता चित् पुरो दधे—ऽशेव देवावर्वते ५
एवेन्द्राग्निभ्यामहावि हव्यं शूष्यं घृतं न पूतमद्रिभिः ।
ता सूरिषु श्रवो बृहद् रयिं गृणत्सु दिधृत—मिषं गृणत्सु दिधृतम् ६ ३०४५

॥ ३२३ ॥ ( ऋ० ६।५९।१-१० ) (३०४६-३०७०) बार्हस्पत्यो भरद्वाजः । बृहती, ७-१० अनुष्टुप् ।

प्र नु वोचा सुतेषु वां वीर्या३ यानि चक्रथुः ।
हतासो वां पितरो देवशत्रव इन्द्राग्नी जीवथो युवम् १
बळित्था महिमा वा—मिन्द्राग्नी पनिष्ठ आ ।
समानो वां जनिता भ्रातरा युवं यमाविहेहमातरा २
ओकिवांसा सुते सचाँ अश्वा सप्ती इवादने ।
इन्द्रा न्व१ग्नी अवसेह वज्रिणा वयं देवा हवामहे ३
य इन्द्राग्नी सुतेषु वां स्तवत् तेष्वृतावृधा ।
जोषवाकं वदतः पज्रहोषिणा न देवा भसथश्चन ४
इन्द्राग्नी को अस्य वां देवौ मर्तश्चिकेतति ।
विषूचो अश्वान् युयुजान ईयत एकः समान आ रथे ५ ३०५०
इन्द्राग्नी अपादियं पूर्वागात् पद्वतीभ्यः । हित्वी शिरो जिह्वया वावदच्चरत् त्रिंशत् पदा न्यक्रमीत् ६
इन्द्राग्नी आ हि तन्वते नरो धन्वानि बाह्वोः । मा नो अस्मिन् महाधने परा वर्क्तं गविष्टिषु ७
इन्द्राग्नी तपन्ति मा—ऽघा अर्यो अरातयः । अप द्वेषांस्या कृतं युयुतं सूर्यादधि ८
इन्द्राग्नी युवोरपि वसु दिव्यानि पार्थिवा । आ न इह प्र यच्छतं रयिं विश्वायुपोषसम् ९
इन्द्राग्नी उक्थवाहसा स्तोमेभिर्हवनश्रुता । विश्वाभिर्गीर्भिरा गत—मस्य सोमस्य पीतये १० ३०५५

॥ ३२४ ॥ ( ऋ० ६।६०।१-१५ ) गायत्री, १-३, १३ त्रिष्टुप्, १४ बृहती, १५ अनुष्टुप्।

श्नथंद् वृत्रमुत संनोति वाज—मिन्द्रा यो अग्नी सहुरी सपर्यात्।
इरज्यन्ता वसव्यस्य भूरेः  सहस्तमा सहसा वाजयन्ता  १
ता योधिष्टमभि गा इन्द्र नून—मपः स्वरुषसो अग्न ऊळ्हाः।
दिशः स्वरुषस इन्द्र चित्रा  अपो गा अग्ने युवसे नियुत्वान्  २
आ वृत्रहणा वृत्रहभिः शुष्मै—रिन्द्र यातं नमोभिरग्ने अर्वाक्।
युवं राधोभिरकवेभिरिन्द्रा—ऽग्ने अस्मे भवतमुत्तमेभिः  ३
ता हुवे ययोरिदं  पप्ने विश्वं पुरा कृतम्  । इन्द्राग्नी न मर्धतः  ४
उग्रा विघनिना मृध  इन्द्राग्नी हवामहे  । ता नो मृळात ईदृशे  ५  ३०६०
हतो वृत्राण्यार्या  हतो दासानि सत्पती  । हतो विश्वा अप द्विषः  ६
इन्द्राग्नी युवामिमे३  ऽभि स्तोमा अनूषत  । पिबतं शंभुवा सुतम्  ७
या वां सन्ति पुरुस्पृहो  नियुतो दाशुषे नरा  । इन्द्राग्नी ताभिरा गतम्  ८
ताभिरा गच्छतं नरो—पेदं सवनं सुतम्  । इन्द्राग्नी सोमपीतये  ९
तमीळिष्व यो अर्चिषा  वना विश्वा परिष्वजत्। कृष्णा कृणोति जिह्वया  १०  ३०६५
य इन्द्र आविवासति  सुम्नमिन्द्रस्य मर्त्यः  । द्युम्नाय सुतरा अपः  ११
ता नो वाजवतीरिष  आशून् पिपृतमर्वतः  । इन्द्रमग्निं च वोळ्हवे  १२
उभा वामिन्द्राग्नी आहुवध्या  उभा राधसः सह मादयध्यै।
उभा दातारविषां रयीणा—मुभा वाजस्य सातये हुवे वाम्  १३
आ नो गव्येभिरश्व्यै—र्वसव्यै३रुप गच्छतम्।
सखायौ देवौ सख्याय शंभुवे—न्द्राग्नी ता हवामहे  १४
इन्द्राग्नी शृणुतं हवं  यजमानस्य सुन्वतः । वीतं हव्यान्या गतं  पिबतं सोम्यं मधु  १५ ३०७०

॥ ३२५ ॥ ( ऋ० ७।९३।१-८ ) (३०७१-३०९०) मैत्रावरुणिर्वसिष्ठः । त्रिष्टुप्।

शुचिं नु स्तोमं नवजातमद्ये—न्द्राग्नी वृत्रहणा जुषेथाम्।
उभा हि वां सुहवा जोहवीमि  ता वाजं सद्य उशते धेष्ठा  १
ता सानसी शवसाना हि भूतं  साकंवृधा शवसा शूशुवांसा।
क्षयन्तौ रायो यवसस्य भूरेः  पृङ्क्तं वाजस्य स्थविरस्य घृष्वेः  २
उपो ह यद् विदथं वाजिनो गु—र्धीभिर्विप्राः प्रमतिमिच्छमानाः।
अर्वन्तो न काष्ठां नक्षमाणा  इन्द्राग्नी जोहुवतो नरस्ते  ३

गीर्भिर्विप्रः प्रमतिमिच्छमान ईट्टे रयिं यशसं पूर्वभाजम् ।
इन्द्राग्नी वृत्रहणा सुवज्रा प्र नो नव्येभिस्तिरतं देष्णैः ४
सं यन्मही मिथती स्पर्धमाने तनूरुचा शूरसाता यतैते ।
अदेवयुं विदथे देवयुभिः सत्रा हतं सोमसुता जनेन ५ ३०७५
इमामु षु सोमसुतिमुप न एन्द्राग्नी सौमनसाय यातम् ।
नू चिद्धि परिमम्नाथे अस्मा—ना वां शश्वद्भिर्ववृतीय वाजैः ६
सो अग्न एना नमसा समिद्धो ऽच्छा मित्रं वरुणमिन्द्रं वोचेः ।
यत् सीमागश्चकृमा तत् सु मृळ तदर्यमादितिः शिश्रथन्तु ७
एता अग्न आशुषाणास इष्टी—र्युवोः सचाभ्यश्याम वाजान् ।
मेन्द्रो नो विष्णुर्मरुतः परि ख्यन् यूयं पात स्वस्तिभिः सदा नः ८

॥ ३२६ ॥ ( ऋ० ७।९४।१-१२ ) गायत्री, १२ अनुष्टुप् ।

इयं वामस्य मन्मन इंद्राग्नी पूर्व्यस्तुतिः । अभ्राद् वृष्टिरिवाजनि १
शृणुतं जरितुर्हव—मिंद्राग्नी वनतं गिरः । ईशाना पिप्यतं धियः २ ३०८०
मा पापत्वाय नो नरे—न्द्राग्नी माभिशस्तये । मा नो रीरधतं निदे ३
इन्द्रे अग्ना नमो बृहत् सुवृक्तिमेरयामहे । धिया धेना अवस्यवः ४
ता हि शश्वन्त ईळत इत्था विप्रास ऊतये । सबाधो वाजसातये ५
ता वां गीर्भिर्विपन्यवः प्रयस्वंतो हवामहे । मेधसाता सनिष्यवः ६
इंद्राग्नी अवसा गत—मस्मभ्यं चर्षणीसहा । मा नो दुःशंस ईशत ७ ३०८५
मा कस्य नो अररुषो धूर्तिः प्रणङ्मर्त्यस्य । इन्द्राग्नी शर्म यच्छतम् ८
गोमद्धिरण्यवद् वसु यद् वामश्वावदीमहे । इंद्राग्नी तद् वनेमहि ९
यत् सोम आ सुते नर इंद्राग्नी अजोहवुः । सप्तीवन्ता सपर्यवः १०
उक्थेभिर्वृत्रहन्तमा या मन्दाना चिदा गिरा । आङ्गूषैराविवासतः ११
ताविद् दुःशंसं मर्त्यं दुर्विद्वांसं रक्षस्विनम् । आभोगं हन्मना हत—मुदधिं हन्मना हतम् १२ ३०९०

॥ ३२७ ॥ ( ऋ० ८।३८।१-१० ) (३०९१-३१००) श्यावाश्व आत्रेयः । गायत्री ।

यज्ञस्य हि स्थ ऋत्विजा सस्नी वाजेषु कर्मसु । इंद्राग्नी तस्य बोधतम् १
तोशासा रथयावाना वृत्रहणापराजिता । इंद्राग्नी तस्य बोधतम् २
इदं वां मदिरं मध्व—धुक्षन्नद्रिभिर्नरः । इंद्राग्नी तस्य बोधतम् ३
जुषेथां यज्ञमिष्टये सुतं सोमं सधस्तुती । इंद्राग्नी आ गतं नरा ४
इमा जुषेथां सवना येभिर्हव्यान्यूहथुः । इंद्राग्नी आ गतं नरा ५ ३०९५

इमां गायत्रवर्तनिं जुषेथां सुष्टुतिं मम । इंद्राग्नी आ गतं नरा ६
प्रातर्यावभिरा गतं देवेभिर्जेन्यावसू । इंद्राग्नी सोमपीतये ७
श्यावाश्वस्य सुन्वतो ऽत्रीणां शृणुतं हवम् । इंद्राग्नी सोमपीतये ८
एवा वामह्व ऊतये यथाहुवन्त मेधिराः । इंद्राग्नी सोमपीतये ९
आहं सरस्वतीवतो- रिन्द्राग्न्योरवो वृणे । याभ्यां गायत्रमृच्यते १० ३१००

॥ ३२८ ॥ ( ऋ० ८।४०।१-१२ )

( ३१०१-३११२ ) नाभाकः काण्वः । महापंक्तिः, २ शक्वरी, १२ त्रिष्टुप् ।

इंद्राग्नी युवं सु नः सहन्ता दासथो रयिम् ।
येन दृळ्हा समत्स्वा वीळु चित साहिषीमह्य- ग्निर्वनेव वात इ- न्नभन्तामन्यके समे १
नहि वां वव्रयामहे ऽथेन्द्रमिद् यजामहे शविष्ठं नृणां नरम् ।
स नः कदा चिदर्वता गमदा वाजसातये गमदा मेधसातये नभन्तामन्यके समे २
ता हि मध्यं भराणा- मिंद्राग्नी अधिक्षितः ।
ता उ कवित्वना कवी पृच्छ्यमाना सखीयते सं धीतमश्नुतं नरा नभन्तामन्यके समे ३
अभ्यर्च नभाकव- दिन्द्राग्नी यजसा गिरा ।
ययोर्विश्वमिदं जग- दियं द्यौः पृथिवी मह्यु१- पस्थे बिभृतो वसु नभन्तामन्यके समे ४
प्र ब्रह्माणि नभाकव- दिन्द्राग्निभ्यामिरज्यत ।
या सप्तबुध्नमर्णवं जिह्मबारमपोर्णुत इंद्र ईशान ओजसा नभन्तामन्यके समे ५ ३१०५
अपि वृश्च पुराणवद् व्रततेरिव गुष्पित- मोजो दासस्य दम्भय ।
वयं तदस्य संभृतं वस्विंद्रेण वि भजेमहि नभन्तामन्यके समे ६
यदिन्द्राग्नी जना इमे विह्वयन्ते तना गिरा ।
अस्माकेभिर्नृभिर्वयं सासह्याम पृतन्यतो वनुयाम वनुष्यतो नभन्तामन्यके समे ७
या नु श्वेताववो दिव उच्चरात उप द्युभिः ।
इंद्राग्न्योरनु व्रत- मुहाना यंति सिंधवो यान्त्सीं बंधादमुञ्चतां नभन्तामन्यके समे ८
पूर्वीष्ट इंद्रोपमातयः पूर्वीरुत प्रशस्तयः सूनो हिन्वस्य हरिवः ।
वस्वो वीरस्यापृचो या नु साधन्त नो धियो नभन्तामन्यके समे ९
तं शिशीता सुवृक्तिभि- स्त्वेषं सत्वानमृग्मियम् ।
उतो नु चिद् य ओजसा शुष्णस्याण्डानि भेदति जेषत् स्वर्वतीरपो नभंतामन्यके समे १० ३११०
तं शिशीता स्वध्वरं सत्यं सत्वानमृत्वियम् ।
उतो नु चिद् य ओहत आण्डा शुष्णस्य भेद- त्यजैः स्वर्वतीरपो नभंतामन्यके समे ११

एवेन्द्राग्निभ्यां पितृवन्नवीयो मंधातृवदङ्गिरस्वदवाचि ।
त्रिधातुना शर्मणा पातमस्मान् वयं स्याम पतयो रयीणाम् १२ ३११२

॥ ३२९ ॥ ( ऋ० १०।१६१।१-५ )

(३११३-३११७) प्राजापत्यो यक्ष्मनाशनः, राजयक्ष्मघ्नं वा । त्रिष्टुप्, ५ अनुष्टुप् ।

मुञ्चामि त्वा हविषा जीवनाय कमज्ञातयक्ष्मादुत राजयक्ष्मात् ।
ग्राहिर्जग्राह यदि वैतदेनं तस्या इन्द्राग्नी प्र मुमुक्तमेनम् १
यदि क्षितायुर्यदि वा परेतो यदि मृत्योरन्तिकं नीत एव ।
तमा हरामि निर्ऋतेरुपस्थादस्पार्षमेनं शतशारदाय २
सहस्राक्षेण शतशारदेन शतायुषा हविषाहार्षमेनम् ।
शतं यथेमं शरदो नयातीन्द्रो विश्वस्य दुरितस्य पारम् ३ ३११५
शतं जीव शरदो वर्धमानः शतं हेमन्ताञ्छतमु वसन्तान् ।
शतमिन्द्राग्नी सविता बृहस्पतिः शतायुषा हविषेमं पुनर्दुः ४
आहार्षं त्वाविदं त्वा पुनरागाः पुनर्नव । सर्वाङ्ग सर्वं ते चक्षुः सर्वमायुश्च तेऽविदम् ५ ३११७

॥ ३३० ॥ ( वा० य० १४।११ )

इंद्राग्नी अव्यथमानामिष्टकां दृंहतं युवम् । पृष्ठेन द्यावापृथिवी अंतरिक्षं च विबाधसे ११+३११८

॥ ३३१ ॥ ( वा० य० १७।६४ )

उद्ग्राभं च निग्राभं च ब्रह्म देवा अवीवृधन् । अधा सपत्नानिन्द्राग्नी मे विषूचीनान्व्यस्यताम् ६४×३११९

॥ ३३२ ॥ ( अथर्व० ७।९७।१-८ )

( ३१२०-३१२७ ) अथर्वा । त्रिष्टुप्, ५ त्रिपदार्षी भुरिग्गायत्री, ६ त्रिपदा प्राजापत्या बृहती,
७ त्रिपदा साम्नी भुरिग्जगती, ८ उपरिष्टाद्बृहती ।

यदद्य त्वा प्रयति यज्ञे अस्मिन् होतश्चिकित्वन्नवृणीमहीह ।
ध्रुवमयो ध्रुवमुता शविष्ठ प्रविद्वान् यज्ञमुप याहि सोमम् १ ३१२०
समिन्द्र नो मनसा नेष गोभिः सं सूरिभिर्हरिवन्त्सं स्वस्त्या ।
सं ब्रह्मणा देवहितं यदस्ति सं देवानां सुमतौ यज्ञियानाम् २
यानावह उशतो देव देवांस्तान् प्रेरय स्वे अग्ने सधस्थे ।
जक्षिवांसः पपिवांसो मधून्यस्मै धत्त वसवो वसूनि ३

+ वा० य० ३।१३; ७।३१, ऋ० ६।६०।१३; ३।१२।१, सा० ६६९, दै० सं० [इन्द्रः] ३०३३, ३०७१ ।
× वा० य० ३३।६१,७६,९३; ऋ० ६।५९।६; ६।६०।५; ७।९४।११; सा० ८५४,२८१; दै० सं० [इन्द्रः] ३०५४, ३०६३, ३०९२ ।

सुगा वो देवाः सदना अकर्म य आजग्म सवने मा जुषाणाः।
वहमाना भरमाणाः स्वा वसूनि वसुं घर्मं दिवमा रोहतानु ४
यज्ञ यज्ञं गच्छ यज्ञपतिं गच्छ। स्वां योनिं गच्छ स्वाहा ५
एष ते यज्ञो यज्ञपते सहसूक्तवाकः। सुवीर्यः स्वाहा ६ ३१२५
वषड्हुतेभ्यो वषडहुतेभ्यः। देवा गातुविदो गातुं वित्त्वा गातुमित ७
मनसस्पत इमं नो दिवि देवेषु यज्ञम्।
स्वाहा दिवि स्वाहा पृथिव्यां स्वाहान्तरिक्षे स्वाहा वाते धां स्वाहा ८ ३१२७

॥३३३॥ ( अथर्व० ६।१०४।१-३ ) ( ३१२८-३१३० ) प्रशोचनः। ३ सोम इन्द्रश्च। अनुष्टुप्।

आदानेन संदानेना॒ऽमित्राना द्यामसि। अपाना ये चैषां प्राणा असुनासून्त्समच्छिदन् १
इदमादानमकरं तपसेन्द्रेण संशितम्। अमित्रा येऽत्र नः सन्ति तानग्न आ द्या त्वम् २
ऐनान्द्यतामिन्द्राग्नी सोमो राजा च मेदिनौ।
इन्द्रो मरुत्वानादान॒ममित्रेभ्यः कृणोतु नः ३ ३१३०

॥३३४॥ ( अथर्व० ७।११०।१-३ ) ( ३१३१-३१३३ ) भृगुः। १ गायत्री, २ त्रिष्टुप्, ३ अनुष्टुप्।

अग्न इन्द्रश्च दाशुषे हतो वृत्राण्यप्रति। उभा हि वृत्रहन्तमा १
याभ्यामजयन्त्स्व१रग्र एव यावातस्थतुर्भुवनानि विश्वा।
प्रचर्षणी वृषणा वज्रबाहू अग्निमिन्द्रं वृत्रहणा हुवेऽहम् २
उप त्वा देवो अग्रभी॒च्चमसेन बृहस्पतिः।
इन्द्र गीर्भिर्न आ विश यजमानाय सुन्वते ३ ३१३३

## ( २ ) इन्द्रावरुणौ।

॥ ३३५ ॥ ( ऋ० १।१७।१-९ )।

( ३१३४-३१४२ ) मेधातिथिः काण्वः। गायत्री, ४-५ पादनिचृत् ( ५ हसीयसी वा ) गायत्री।

इन्द्रावरुणयोरहं सम्राजोरव आ वृणे। ता नो मृळात ईदृशे १
गन्तारा हि स्थोऽवसे हवं विप्रस्य मावतः। धर्तारा चर्षणीनाम् २ ३१३५
अनुकामं तर्पयेथा॒मिन्द्रावरुण राय आ। ता वां नेदिष्ठमीमहे ३
युवाकु हि शचीनां युवाकु सुमतीनाम्। भूयाम वाजदाव्नाम् ४
इन्द्रः सहस्रदाव्नां वरुणः शंस्यानाम्। क्रतुर्भवत्युक्थ्यः ५
तयोरिदवसा वयं सनेम नि च धीमहि। स्यादुत प्ररेचनम् ६
इन्द्रावरुण वामहं हुवे चित्राय राधसे। अस्मान्त्सु जिग्युषस्कृतम् ७ ३१४०

इन्द्रावरुण नू नु वां सिषासन्तीषु धीष्वा । अस्मभ्यं शर्म यच्छतम् ८
प्र वामश्नोतु सुष्टुति—रिन्द्रावरुण यां हुवे । यामृधाथे सधस्तुतिम् ९ ३१४२

॥ ३३६ ॥ ( ऋ० ३।६२।१-३ )

( ३१४३-३१४५ ) गाथिनो विश्वामित्रः । १-३ त्रिष्टुप् ।

इमा उ वां भृमयो मन्यमाना युवावते न तुज्या अभूवन् ।
क्व१ त्यदिन्द्रावरुणा यशो वां येन स्मा सिनं भरथः सखिभ्यः १
अयमु वां पुरुतमो रयीय—ञ्छश्वत्तममवसे जोहवीति ।
सजोषाविन्द्रावरुणा मरुद्भि—र्दिवा पृथिव्या शृणुतं हवं मे २
अस्मे तदिन्द्रावरुणा वसु ष्या—दस्मे रयिर्मरुतः सर्ववीरः ।
अस्मान् वरूत्रीः शरणैरव—न्त्वस्मान् होत्रा भारती दक्षिणाभिः ३ ३१४५

॥ ३३७ ॥ ( ऋ० ४।४१।१-११ )

( ३१४६-३१५६ ) वामदेवो गौतमः । त्रिष्टुप् ।

इन्द्रा को वां वरुणा सुम्नमाप स्तोमो हविष्माँ अमृतो न होता ।
यो वां हृदि क्रतुमाँ अस्मदुक्तः पस्पर्शदिन्द्रावरुणा नमस्वान् १
इन्द्रा ह यो वरुणा चक्र आपी देवौ मर्तः सख्याय प्रयस्वान् ।
स हन्ति वृत्रा समिथेषु शत्रू—नवोभिर्वा महद्भिः स प्र शृण्वे २
इन्द्रा ह रत्नं वरुणा धेष्ठे—त्था नृभ्यः शशमानेभ्यस्ता ।
यदी सखाया सख्याय सोमैः सुतेभिः सुप्रयसा मादयैते ३
इन्द्रा युवं वरुणा दिद्युमस्मि—न्नोजिष्ठमुग्रा नि वधिष्टं वज्रम् ।
यो नो दुरेवो वृकतिर्दभीति—स्तस्मिन् मिमाथामभिभूत्योजः ४
इन्द्रा युवं वरुणा भूतमस्या धियः प्रेतारा वृषभेव धेनोः ।
सा नो दुहीयद् यवसेव गत्वी सहस्रधारा पयसा मही गौः ५ ३१५०
तोके हिते तनय उर्वरासु सूरो दृशीके वृषणश्च पौंस्ये ।
इन्द्रा नो अत्र वरुणा स्याता—मवोभिर्दस्मा परितक्म्यायाम् ६
युवामिद्ध्यवसे पूर्व्याय परि प्रभूती गविषः स्वापी ।
वृणीमहे सख्याय प्रियाय शूरा मंहिष्ठा पितरेव शंभू ७
ता वां धियोऽवसे वाजयन्ती—राजिं न जग्मुर्युवयूः सुदानू ।
श्रिये न गाव उप सोममस्थु—रिन्द्रं गिरो वरुणं मे मनीषाः ८
इमा इन्द्रं वरुणं मे मनीषा अग्मन्नुप द्रविणमिच्छमानाः ।
उपेमस्थुर्जोष्टार इव वस्वो रघ्वीरिव श्रवसो भिक्षमाणाः ९

अश्व्यस्य त्मना रथ्यस्य पुष्टे---र्नित्यस्य रायः पतयः स्याम ।
ता चक्राणा ऊतिभिर्नव्यसीभि---रस्मत्रा रायो नियुतः सचन्ताम् १० ३१५५
आ नो बृहन्ता बृहतीभिरूती इन्द्र यातं वरुण वाजसातौ ।
यद् दिद्यवः पृतनासु प्रक्रीळान् तस्य वां स्याम सनितार आजेः ११ ३१५६

॥ ३३८ ॥ ( ऋ० ४।४२।७-१० )

( ३१५७-३१६० ) त्रसदस्युः पौरुकुत्स्यः । त्रिष्टुप् ।

विदुष्टे विश्वा भुवनानि तस्य ता प्र ब्रवीषि वरुणाय वेधः ।
त्वं वृत्राणि शृण्विषे जघन्वान् त्वं वृताँ अरिणा इन्द्र सिन्धून् ७
अस्माकमत्र पितरस्त आसन् त्सप्त ऋषयो दौर्गहे बध्यमाने ।
त आयजन्त त्रसदस्युमस्या इन्द्रं न वृत्रतुरमर्धदेवम् ८
पुरुकुत्सानी हि वामदाश---द्धव्येभिरिन्द्रावरुणा नमोभिः ।
अथा राजानं त्रसदस्युमस्या वृत्रहणं ददथुरर्धदेवम् ९
राया वयं ससवांसो मदेम हव्येन देवा यवसेन गावः ।
तां धेनुमिन्द्रावरुणा युवं नो विश्वाहा धत्तमनपस्फुरन्तीम् १० ३१६०

॥३३९॥ ( ऋ० ६।६८।१-११ ) ( ३५६१--३१७१ ) बार्हस्पत्यो भरद्वाजः । त्रिष्टुप्, ९--१० जगती ।

श्रुष्टी वां यज्ञ उद्यतः सजोषा मनुष्वद् वृक्तबर्हिषो यजध्यै ।
आ य इन्द्रावरुणाविषे अद्य महे सुम्नाय मह आववर्तत् १
ता हि श्रेष्ठा देवताता तुजा शूराणां शविष्ठा ता हि भूतम् ।
मघोनां मंहिष्ठा तुविशुष्म ऋतेन वृत्रतुरा सर्वसेना २
ता गृणीहि नमस्येभिः शूषैः सुम्नेभिरिन्द्रावरुणा चकाना ।
वज्रेणान्यः शवसा हन्ति वृत्रं सिषक्त्यन्यो वृजनेषु विप्रः ३
ग्नाश्च यन्नरश्च वावृधन्त विश्वे देवासो नरां स्वगूर्ताः ।
प्रैभ्य इन्द्रावरुणा महित्वा द्यौश्च पृथिवि भूतमुर्वी ४
स इत् सुदानुः स्ववाँ ऋतावे---न्द्रा यो वां वरुण दाशति त्मन् ।
इषा स द्विषस्तरेद् दास्वान् वंसद् रयिं रयिवतश्च जनान् ५ ३१६५
यं युवं दाश्वध्वराय देवा रयिं धत्थो वसुमन्तं पुरुक्षुम् ।
अस्मे स इन्द्रावरुणावपि ष्यात् प्र यो भनक्ति वनुषामशस्तीः ६
उत नः सुत्रात्रो देवगोपाः सूरिभ्य इन्द्रावरुणा रयिः ष्यात् ।
येषां शुष्मः पृतनासु साह्वान् प्र सद्यो द्युम्ना तिरते ततुरिः ७

नू नं इन्द्रावरुणा गृणाना पृङ्क्तं रयिं सौश्रवसाय देवा ।
इत्था गृणन्तो महिनस्य शर्धो ऽपो न नावा दुरिता तरेम ८
प्र सम्राजे बृहते मन्म नु प्रिय मर्च देवाय वरुणाय सप्रथः ।
अयं य उर्वी महिना महिव्रतः क्रत्वा विभात्यजरो न शोचिषा ९
इन्द्रावरुणा सुतपाविमं सुतं सोमं पिबतं मद्यं धृतव्रता ।
युवो रथो अध्वरं देववीतये प्रति स्वसरमुप याति पीतये १० ३१७०
इन्द्रावरुणा मधुमत्तमस्य वृष्णः सोमस्य वृषणा वृषेथाम् ।
इदं वामन्धः परिषिक्तमस्मे आसद्यास्मिन् बर्हिषि मादयेथाम् ११ ३१७१

॥३४०॥ ( ऋ० ७।८२।१-१० ) ( ३१७२--३२०१ ) मैत्रावरुणिर्वसिष्ठः । जगती ।

इन्द्रावरुणा युवमध्वराय नो विशे जनाय महि शर्म यच्छतम् ।
दीर्घप्रयज्युमति यो वनुष्यति वयं जयेम पृतनासु दूढ्यः १
सम्राळन्यः स्वराळन्य उच्यते वां महान्ताविन्द्रावरुणा महावसू ।
विश्वे देवासः परमे व्योमनि सं वामोजो वृषणा सं बलं दधुः २
अन्वपां खान्यतृन्तमोजसा सूर्यमैरयतं दिवि प्रभुम् ।
इन्द्रावरुणा मदे अस्य मायिनो ऽपिन्वतमपितः पिन्वतं धियः ३
युवामिद् युत्सु पृतनासु वह्नयो युवां क्षेमस्य प्रसवे मितज्ञवः ।
ईशाना वस्व उभयस्य कारव इन्द्रावरुणा सुहवा हवामहे ४ ३१७५
इन्द्रावरुणा यदिमानि चक्रथु र्विश्वा जातानि भुवनस्य मज्मना ।
क्षेमेण मित्रो वरुणं दुवस्यति मरुद्भिरुग्रः शुभमन्य ईयते ५
महे शुल्काय वरुणस्य नु त्विष ओजो मिमाते ध्रुवमस्य यत् स्वम् ।
अजामिमन्यः श्नथयन्तमातिरद् दभ्रेभिरन्यः प्र वृणोति भूयसः ६
न तमंहो न दुरितानि मर्त्य मिन्द्रावरुणा न तपः कुतश्चन ।
यस्य देवा गच्छथो वीथो अध्वरं न तं मर्तस्य नशते परिह्वृतिः ७
अर्वाङ्नरा दैव्येनावसा गतं शृणुतं हवं यदि मे जुजोषथः ।
युवोर्हि सख्यमुत वा यदाप्यं मार्डीकमिन्द्रावरुणा नि यच्छतम् ८
अस्माकमिन्द्रावरुणा भरेभरे पुरोयोधा भवतं कृष्ट्योजसा ।
यद् वां हवन्त उभये अध स्पृधि नरस्तोकस्य तनयस्य सातिषु ९ ३१८०
अस्मे इन्द्रो वरुणो मित्रो अर्यमा द्युम्नं यच्छन्तु महि शर्म सप्रथः ।
अवध्रं ज्योतिरदितेर्ऋतावृधो देवस्य श्लोकं सवितुर्मनामहे १०

॥३४१॥ ( ऋ० ७।८३।१-१० )

युवां नरा पश्यमानास आप्यं प्राचा गव्यन्तः पृथुपर्शवो ययुः ।
दासा च वृत्रा हतमार्याणि च सुदासमिन्द्रावरुणावसावतम् १
यत्रा नरः समयन्ते कृतध्वजो यस्मिन्नाजा भवति किं चन प्रियम् ।
यत्रा भयन्ते भुवना स्वर्दृश स्तत्रा न इन्द्रावरुणाधि वोचतम् २
सं भूम्या अन्ता ध्वसिरा अदृक्षते न्द्रावरुणा दिवि घोष आरुहत ।
अस्थुर्जनानामुप मामरातयो ऽर्वागवसा हवनश्रुता गतम् ३
इन्द्रावरुणा वधनाभिरप्रति भेदं वन्वन्ता प्र सुदासमावतम् ।
ब्रह्माण्येषां शृणुतं हवीमनि सत्या तृत्सूनामभवत् पुरोहितिः ४ ३१८५
इन्द्रावरुणावभ्या तपन्ति माघान्यर्यो वनुषामरातयः ।
युवं हि वस्व उभयस्य राजथो ऽध स्मा नोऽवतं पार्ये दिवि ५
युवां हवन्त उभयास आजिष्वि न्द्रं च वस्वो वरुणं च सातये ।
यत्र राजभिर्दशभिर्निबाधितं प्र सुदासमावतं तृत्सुभिः सह ६
दश राजानः समिता अयज्यवः सुदासमिन्द्रावरुणा न युयुधुः ।
सत्या नृणामद्मसदामुपस्तुति र्देवा एषामभवन् देवहूतिषु ७
दाशराज्ञे परियत्ताय विश्वतः सुदास इन्द्रावरुणावशिक्षतम् ।
श्वित्यञ्चो यत्र नमसा कपर्दिनो धिया धीवन्तो असपन्त तृत्सवः ८
वृत्राण्यन्यः समिथेषु जिघ्नते व्रतान्यन्यो अभि रक्षते सदा ।
हवामहे वां वृषणा सुवृक्तिभि रस्मे इन्द्रावरुणा शर्म यच्छतम् ९ ३१९०
अस्मे इन्द्रो वरुणो मित्रो अर्यमा द्युम्नं यच्छन्तु महि शर्म सप्रथः ।
अवध्रं ज्योतिरदितेर्ऋतावृधो देवस्य श्लोकं सवितुर्मनामहे १०

॥ ३४२ ॥ ( ऋ० ७।८४।१-५ ) त्रिष्टुप् ।

आ वां राजानावध्वरे ववृत्यां हव्येभिरिन्द्रावरुणा नमोभिः ।
प्र वां घृताची बाह्वोर्दधाना परि त्मना विषुरूपा जिगाति १
युवो राष्ट्रं बृहदिन्वति द्यौ र्यौ सेतृभिररज्जुभिः सिनीथः ।
परि नो हेळो वरुणस्य वृज्या उरुं न इन्द्रः कृणवदु लोकम् २
कृतं नो यज्ञं विदथेषु चारुं कृतं ब्रह्माणि सूरिषु प्रशस्ता ।
उपो रयिर्देवजूतो न एतु प्र णः स्पार्हाभिरूतिभिस्तिरेतम् ३
अस्मे इन्द्रावरुणा विश्ववारं रयिं धत्तं वसुमन्तं पुरुक्षुम् ।
प्र य आदित्यो अनृता मिना त्यमिता शूरो दयते वसूनि ४ ३१९५

इयमिन्द्रं वरुणमष्ट मे गीः प्रावत् तोके तनये तूतुजाना ।
सुरत्नासो देववीतिं गमेम यूयं पात स्वस्तिभिः सदा नः ५

॥ ३४३ ॥ ( ऋ० ७।८५।१-५ )

पुनीषे वामरक्षसं मनीषां सोममिन्द्राय वरुणाय जुह्वत् ।
घृतप्रतीकामुषसं न देवीं ता नो यामन्नुरुष्यतामभीके १
स्पर्धन्ते वा उ देवहूये अत्र येषु ध्वजेषु दिद्यवः पतन्ति ।
युवं ताँ इन्द्रावरुणावमित्रान् हतं पराचः शर्वा विषूचः २
आपश्चिद्धि स्वयशसः सदःसु देवीरिन्द्रं वरुणं देवता धुः ।
कृष्टीरन्यो धारयति प्रविक्ता वृत्राण्यन्यो अप्रतीनि हन्ति ३
स सुक्रतुर्ऋतचिदस्तु होता य आदित्य शवसा वां नमस्वान् ।
आववर्तदवसे वां हविष्मा-नसदित् स सुविताय प्रयस्वान् ४ ३२००
इयमिन्द्रं वरुणमष्ट मे गीः प्रावत् तोके तनये तूतुजाना ।
सुरत्नासो देववीतिं गमेम यूयं पात स्वस्तिभिः सदा नः ५ ३२०१

॥ ३४४ ॥ ( ऋ० ८।५९।१-७ )

( ३२०२-३२०८ ) सुपर्णः काण्वः । जगती ।

इमानि वां भागधेयानि सिस्रत इन्द्रावरुणा प्र महे सुतेषु वाम् ।
यज्ञेयज्ञे ह सवना भुरण्यथो यत् सुन्वते यजमानाय शिक्षथः १
निष्षिध्वरीरोषधीराप आस्ता-मिन्द्रावरुणा महिमानमाशत ।
या सिस्रतू रजसः पारे अध्वनो ययोः शत्रुर्नकिरादेव ओहते २
सत्यं तदिन्द्रावरुणा कृशस्य वां मध्व ऊर्मिं दुहते सप्त वाणीः ।
ताभिर्दाश्वांसमवतं शुभस्पती यो वामदब्धो अभि पाति चित्तिभिः ३
घृतप्रुषः सौम्या जीरदानवः सप्त स्वसारः सदन ऋतस्य ।
या ह वामिन्द्रावरुणा घृतश्चुत-स्ताभिर्धत्तं यजमानाय शिक्षतम् ४ ३२०५
अवोचाम महते सौभगाय सत्यं त्वेषाभ्यां महिमानमिन्द्रियम् ।
अस्मान् त्स्विन्द्रावरुणा घृतश्चुत-स्त्रिभिः साप्तेभिरवतं शुभस्पती ५
इन्द्रावरुणा यदृषिभ्यो मनीषां वाचो मतिं श्रुतमदत्तमग्रे ।
यानि स्थानान्यसृजन्त धीरा यज्ञं तन्वानास्तपसाभ्यपश्यम् ६
इन्द्रावरुणा सौमनसमदृप्तं रायस्पोषं यजमानेषु धत्तम् ।
प्रजां पुष्टिं भूतिमस्मासु धत्तं दीर्घायुत्वाय प्र तिरतं न आयुः ७ ३२०८

॥ ३४५ ॥ ( वा० य० ८।३७ ) त्रिष्टुप् यजुरन्ता ।

इन्द्रश्च सम्राड् वरुणश्च राजा तौ ते भक्षं चक्रतुरग्रऽएतम् ।
तयोरहमनु भक्षं भक्षयामि वाग्देवी जुषाणा सोमस्य तृप्यतु सह प्राणेन स्वाहा ॥३७॥ ३२०९

## ( ३ ) इन्द्र-वायू ।

॥३४६॥ ( ऋ० १।२।४-६ ) ( ३२१०-३२१२ ) मधुच्छन्दा वैश्वामित्रः । गायत्री ।

इन्द्रवायू इमे सुता उप प्रयोभिरा गतम् ।
इन्दवो वामुशन्ति हि ४ ३२१०
वायविन्द्रश्च चेतथः सुतानां वाजिनीवसू ।
तावा यातमुप द्रवत् ५
वायविन्द्रश्च सुन्वत आ यातमुप निष्कृतम् ।
मक्ष्वित्था धिया नरा ६ ३२१२

॥३४७॥ ( ऋ० १।२३।२-३ ) ( ३२१३-३२१४ ) मेधातिथिः काण्वः । गायत्री ।

उभा देवा दिविस्पृशे न्द्रवायू हवामहे ।
अस्य सोमस्य पीतये २ ३२१३
इन्द्रवायू मनोजुवा विप्रा हवन्त ऊतये ।
सहस्राक्षा धियस्पती ३ ३२१४

॥३४८॥ (ऋ०१।१३५ ४-८ ) ( ३२१५ ३२१९ ) परुच्छेपो दैवोदासिः । अत्यष्टिः, ७-८ अष्टिः ।

आ वां रथो नियुत्वान् वक्षदवसे ऽभि प्रयांसि सुधितानि वीतये वायो हव्यानि वीतये ।
पिबतं मध्वो अन्धसः पूर्वपेयं हि वां हितम् ।
वायवा चन्द्रेण राधसा गत मिन्द्रश्च राधसा गतम् ४ ३२१५
आ वां धियो ववृत्युरध्वराँ उपे ममिन्दुं मर्मृजन्त वाजिन माशुमत्यं न वाजिनम् ।
तेषां पिबतमस्मयू आ नो गन्तमिहोत्या ।
इन्द्रवायू सुतानामद्रिभिर्युवं मदाय वाजदा युवम् ५
इमे वां सोमा अप्स्वा सुता इहा ध्वर्युभिर्भरमाणा अयंसत वायो शुक्रा अयंसत ।
एते वामभ्यसृक्षत तिरः पवित्रमाशवः ।
युवायवोऽति रोमाण्यव्यया सोमासो अत्यव्यया ६
अति वायो ससतो याहि शश्वतो यत्र ग्रावा वदति तत्र गच्छतं गृहमिन्द्रश्च गच्छतम् ।
वि सूनृता ददृशे रीयते घृत मा पूर्णया नियुता याथो अध्वर मिन्द्रश्च याथो अध्वरम् ७

अत्राह तद् वहेथे मध्व आहुतिं यमश्वत्थमुपतिष्ठन्त जायवोऽस्मे ते सन्तु जायवः ।
साकं गावः सुवते पच्यते यवो न ते वाय उप दस्यन्ति धेनवो नाप दस्यन्ति धेनवः ८ ३२१९

॥ ३४९ ॥ (ऋ० २।४१।३ )

( ३२२० ) गृत्समदः शौनकः । गायत्री ।

शुक्रस्याद्य गवाशिर इन्द्रवायू नियुत्वतः । आ यातं पिबतं नरा ३ ३२२०

॥ ३५० ॥ (ऋ० ४।४६।२-७ )

( ३२२१-३२२९ ) वामदेवो गौतमः । गायत्री ।

शतेना नो अभिष्टिभि र्नियुत्वाँ इन्द्रसारथिः । वायो सुतस्य तृम्पतम् २
आ वां सहस्रं हरय इन्द्रवायू अभि प्रयः । वहन्तु सोमपीतये ३
रथं हिरण्यवन्धुर मिन्द्रवायू स्वध्वरम् । आ हि स्थाथो दिविस्पृशम् ४
रथेन पृथुपाजसा दाश्वांसमुप गच्छतम् । इन्द्रवायू इहा गतम् ५
इन्द्रवायू अयं सुत स्तं देवेभिः सजोषसा । पिबतं दाशुषो गृहे ६ ३२२५
इह प्रयाणमस्तु वा मिन्द्रवायू विमोचनम् । इह वां सोमपीतये ७

॥ ३५१ ॥ ( ऋ० ४।४७।२-४ ) अनुष्टुप् ।

इन्द्रश्च वायवेषां सोमानां पीतिमर्हथः ।
युवां हि यन्तीन्दवो निम्नमापो न सध्र्यक् २
वायविन्द्रश्च शुष्मिणा सरथं शवसस्पती ।
नियुत्वन्ता न ऊतय आ यातं सोमपीतये ३
या वां सन्ति पुरुस्पृहो नियुतो दाशुषे नरा ।
अस्मे ता यज्ञवाहसे न्द्रवायू नि यच्छतम् ४ ३२२९

॥ ३५२ ॥ ( ऋ० ५।५१।४, ६-७ )

( ३२३०-३२३२ ) स्वस्त्यात्रेयः । गायत्री, ( ६, ७ ) उष्णिक् ।

अयं सोमश्चमू सुतोऽमत्रे परि षिच्यते । प्रिय इन्द्राय वायवे ४ ३२३०
इन्द्रश्च वायवेषां सुतानां पीतिमर्हथः । ताञ्जुषेथामरेपसावभि प्रयः ६
सुता इन्द्राय वायवे सोमासो दध्याशिरः । निम्नं न यन्ति सिन्धवोऽभि प्रयः ७ ३२३२

॥३५३॥ ( ऋ० ७।९०।५-७ ) ( ३२३३-३२४२ ) मैत्रावरुणिर्वसिष्ठः । त्रिष्टुप् ।

ते सत्येन मनसा दीध्यानाः स्वेन युक्तासः क्रतुना वहन्ति ।
इन्द्रवायू वीरवाहं रथं वा मीशानयोरभि पृक्षः सचन्ते ५ ३२३३
ईशानासो ये दधते स्वर्णो गोभिरश्वेभिर्वसुभिर्हिरण्यैः ।
इन्द्रवायू सूरयो विश्वमायु र्र्वद्भिर्वीरैः पृतनासु सह्युः ६

अर्वन्तो न श्रवसो भिक्षमाणा इन्द्रवायू सुष्टुतिभिर्वसिष्ठाः।
वाजयन्तः स्ववसे हुवेम यूयं पात स्वस्तिभिः सदा नः ७ ३२३५

॥ ३५४ ॥ ( ऋ० ७।९१।२, ४-७ )

उशन्ता दूता न दभाय गोपा मासश्च पाथः शरदश्च पूर्वीः।
इन्द्रवायू सुष्टुतिर्वामियाना मार्डीकमीट्टे सुवितं च नव्यम् २
यावत् तरस्तन्वो३ यावदोजो यावन्नरश्चक्षसा दीध्यानाः।
शुचिं सोमं शुचिपा पातमस्मे इन्द्रवायू सदतं बर्हिरेदम् ४
नियुवाना नियुतः स्पार्हवीरा इन्द्रवायू सरथं यातमर्वाक्।
इदं हि वां प्रभृतं मध्वो अग्र— मध प्रीणाना वि मुमुक्तमस्मे ५
या वां शतं नियुतो याः सहस्र— मिन्द्रवायू विश्ववाराः सचन्ते।
आभिर्यातं सुविदत्राभिरर्वाक् पातं नरा प्रतिभृतस्य मध्वः ६
अर्वन्तो न श्रवसो भिक्षमाणा इन्द्रवायू सुष्टुतिभिर्वसिष्ठाः।
वाजयन्तः स्ववसे हुवेम यूयं पात स्वस्तिभिः सदा नः ७ ३२४०

॥ ३५५ ॥ ( ऋ० ७।९२।२,४ )

प्र सोता जीरो अध्वरेष्वस्थात् सोममिन्द्राय वायवे पिबध्यै।
प्र यद् वां मध्वो अग्रियं भर— न्त्यध्वर्यवो देवयन्तः शचीभिः २
ये वायव इन्द्रमादनास आदेवासो नितोशनासो अर्यः।
घ्नन्तो वृत्राणि सूरिभिः ष्याम सासह्वांसो युधा नृभिरमित्रान् ४ ३२४२

॥ ३५६ ॥ ( वा० य० ३३।८६ )

इन्द्रवायू सुसन्दृशा सुहवेह हवामहे।
यथा नः सर्वऽइज्जनोऽनमीवः सङ्गमे सुमनाऽअसत् ॥ ८६ ॥ × ३२४३

॥ ३५७ ॥ ( अथर्व० ३।२०।६ ) वसिष्ठः। पथ्यापङ्क्तिः।

इन्द्रवायू उभाविह सुहवेह हवामहे।
यथा नः सर्व इज्जनः संगत्यां सुमना असद्दानकामश्च नो भुवत् ६ ३२४४

## ( ४ ) इन्द्र--मरुतश्च।

॥ ३५८ ॥ ( ऋ० १।६।५,७ ) ( ३२४५-३२४६ ) मधुच्छन्दा वैश्वामित्रः। गायत्री।

वीळु चिदारुजत्नुभि— र्गुहा चिदिन्द्र वह्निभिः। अविन्द उस्रिया अनु ५ ३२४५
इन्द्रेण सं हि दृक्षसे संजग्मानो अबिभ्युषा। मन्दू समानवर्चसा ७ ३२४६

× [ वा० य० ७।८; ३३, ५६, ८६, ऋ० १।२।४, १०।१४१।४, अथर्व० ३।२०।६, ] दै० स० [ इन्द्र. ] ३२१५। दै० [ इन्द्रः ] २७

## ( ५ ) मरुत्वानिन्द्रः ।

॥ ३५९ ॥ ( ऋ० १।२३।७-९ ) ( ३२४७-३२४९ ) मेधातिथिः काण्वः । गायत्री ।

मरुत्वन्तं हवामह इन्द्रमा सोमपीतये । सजूर्गणेन तृम्पतु ७
इन्द्रज्येष्ठा मरुद्गणा देवासः पूषरातयः । विश्वे मम श्रुता हवम् ८
हत वृत्रं सुदानव इन्द्रेण सहसा युजा । मा नो दुःशंस ईशत ९ ३२४९

॥ ३६० ॥ ( ऋ० १।१६५।१-१५ )
( ३२५०-३२६४ ) इंद्रः, ३, ५, ७, ९, मरुतः; १३-१५ अगस्त्यो मैत्रावरुणिः । त्रिष्टुप् ।

कया शुभा सवयसः सनीळाः समान्या मरुतः सं मिमिक्षुः ।
कया मती कुत एतास एते ऽर्चन्ति शुष्मं वृषणो वसूया १ ३२५०
कस्य ब्रह्माणि जुजुषुर्युवानः को अध्वरे मरुत आ ववर्त ।
श्येनाँ इव ध्रजतो अन्तरिक्षे केन महा मनसा रीरमाम २
कुतस्त्वमिन्द्र माहिनः स न्नेको यासि सत्पते किं त इत्था ।
सं पृच्छसे समराणः शुभानै र्वोचेस्तन्नो हरिवो यत् ते अस्मे ३
ब्रह्माणि मे मतयः शं सुतासः शुष्म इयर्ति प्रभृतो मे अद्रिः ।
आ शासते प्रति हर्यन्त्युक्थे मा हरी वहतस्ता नो अच्छ ४
अतो वयमन्तमेभिर्युजानाः स्वक्षत्रेभिस्तन्वः शुम्भमानाः ।
महोभिरेताँ उप युज्महे न्विन्द्र स्वधामनु हि नो बभूथ ५
क्व स्या वो मरुतः स्वधासीद् यन्मामेकं समधत्ताहिहत्ये ।
अहं ह्युग्रस्तविषस्तुविष्मान् विश्वस्य शत्रोरनमं वधस्नैः ६ ३२५५
भूरि चकर्थ युज्येभिरस्मे समानेभिर्वृषभ पौंस्येभिः ।
भूरीणि हि कृणवामा शविष्ठे न्द्र क्रत्वा मरुतो यद् वशाम ७
वधीं वृत्रं मरुत इन्द्रियेण स्वेन भामेन तविषो बभूवान् ।
अहमेता मनवे विश्वश्चन्द्राः सुगा अपश्चकर वज्रबाहुः ८
अनुत्तमा ते मघवन्नकिर्नु न त्वावाँ अस्ति देवता विदानः ।
न जायमानो नशते न जातो यानि करिष्या कृणुहि प्रवृद्ध ९
एकस्य चिन्मे विभ्वस्त्वोजो या नु दधृष्वान् कृणवै मनीषा ।
अहं ह्युग्रो मरुतो विदानो यानि च्यवमिन्द्र इदीश एषाम् १०
अमन्दन्मा मरुतः स्तोमो अत्र यन्मे नरः श्रुत्यं ब्रह्म चक्र ।
इन्द्राय वृष्णे सुमखाय मह्यं सख्ये सखायस्तन्वे तनूभिः ११ ३२६०

एवेदेते प्रति मा रोचमाना अनेद्यः श्रव एषो दधानाः।
संचक्ष्या मरुतश्चन्द्रवर्णा अच्छान्त मे छदयाथा च नूनम् १२
को न्वत्र मरुतो मामहे वः प्र यातन सखीँरच्छा सखायः।
मन्मानि चित्रा अपिवातयन्त एषां भूत नवेदा म ऋतानाम् १३
आ यद् दुवस्याद् दुवसे न कारु–रस्माञ्चक्रे मान्यस्य मेधा।
ओ षु वर्त्त मरुतो विप्रमच्छे–मा ब्रह्माणि जरिता वो अर्चत् १४
एष वः स्तोमो मरुत इयं गी–र्मान्दार्यस्य मान्यस्य कारोः।
एषा यासीष्ट तन्वे वयां विद्यामेषं वृजनं जीरदानुम् १५ ३२६४

॥ ३६१ ॥ ( ऋ० १।१७१।३-६ ) ( ३२६५-३२६८ ) अगस्त्यो मैत्रावरुणिः। त्रिष्टुप्।

स्तुतासो नो मरुतो मृळयन्तू–त स्तुतो मघवा शंभविष्ठः।
ऊर्ध्वा नः सन्तु कोम्या वना–न्यहानि विश्वा मरुतो जिगीषा ३ ३२६५
अस्मादहं तविषादीषमाण इन्द्राद् भिया मरुतो रेजमानः।
युष्मभ्यं हव्या निशितान्यासन् तान्यारे चकृमा मृळता नः ४
येन मानासश्चितयन्त उस्रा व्युष्टिषु शवसा शश्वतीनाम्।
स नो मरुद्भिर्वृषभ श्रवो धा उग्र उग्रेभिः स्थविरः सहोदाः ५
त्वं पाहीन्द्र सहीयसो नॄन् भवा मरुद्भिरवयातहेळाः।
सुप्रकेतेभिः सासहिर्दधानो विद्यामेषं वृजनं जीरदानुम् ६ ३२६८

## ( ६ ) इन्द्रामरुतौ।

॥ ३६२ ॥ ( ऋ० ८।९६।१४ )

( ३२६९ ) तिरश्चीराङ्गिरसो, द्युतानो वा मारुतः। त्रिष्टुप्।

द्रप्समपश्यं विषुणे चरन्त–मुपह्वरे नद्यो अंशुमत्याः।
नभो न कृष्णमवतस्थिवांस–मिष्यामि वो वृषणो युध्यताजौ १४ ३२६९

## ( ७ ) इन्द्रासोमौ।

॥ ३६३ ॥ ( ऋ० २।३०।६ ) ( ३२७० ) गृत्समदः शौनकः। त्रिष्टुप्।

प्र हि क्रतुं वृहथो यं वनुथो रध्रस्य स्थो यजमानस्य चोदौ।
इन्द्रासोमा युवमस्माँ अविष्ट–मस्मिन् भयस्थे कृणुतमु लोकम् ६ ३२७०

॥ ३६४ ॥ ( ऋ० ६।७२।१-५ ) ( ३२७१-३२७५ ) बार्हस्पत्यो भरद्वाजः। त्रिष्टुप्।

इन्द्रासोमा महि तद् वां महित्वं युवं महानि प्रथमानि चक्रथुः।
युवं सूर्यं विविदथुर्युवं स्व१–र्विश्वा तमांस्यहतं निदश्च १

❀

इन्द्रासोमा वासयथ उषास--मुत सूर्यं नयथो ज्योतिषा सह ।
उप द्यां स्कम्भथुः स्कम्भनेना--ऽप्रथतं पृथिवीं मातरं वि २
इन्द्रासोमावहिमपः परिष्ठां हथो वृत्रमनु वां द्यौरमन्यत ।
प्रार्णांस्यैरयतं नदीना--मा समुद्राणि पप्रथुः पुरूणि ३
इंद्रासोमा पक्वमामास्वन्त--र्नि गवामिद् दधथुर्वक्षणासु ।
जगृभथुरनपिनद्धमासु रुशच्चित्रासु जगतीष्वन्तः ४
इन्द्रासोमा युवमङ्ग तरुत्र--मपत्यसाचं श्रुत्यं रराथे ।
युवं शुष्मं नर्यं चर्षणिभ्यः सं विव्यथुः पृतनाषाहमुग्रा ५ ३२७५

॥ ३६५ ॥ ( ऋ० १०।८९।५ ) ( ३२७६ ) रेणुर्वैश्वामित्रः । त्रिष्टुप् ।

आपान्तमन्युस्तृपलप्रभर्मा धुनिः शिमीवाञ्छरुमाँ ऋजीषी ।
सोमो विश्वान्यतसा वनानि नार्वागिन्द्रं प्रतिमानानि देभुः ५ ३२७६

॥ ३६६ ॥ ( ऋ० १०।१२४।९ ) ( ३२७७ ) अग्निः ( सोमेन्द्रौ ) । त्रिष्टुप् ।

बीभत्सूनां सयुजं हंसमाहु--रपां दिव्यानां सख्ये चरन्तम् ।
अनुष्टुभमनु चर्चूर्यमाण--मिन्द्रं नि चिक्युः कवयो मनीषा ९ ३२७७

॥ ३६७ ॥ ( अथर्व० ८।४।१-२५ )

( ३२७८-३३०२ ) चातनः । जगती, ८-१४, १६-१७, १९, २२, २४ त्रिष्टुप्, २०; २३ भुरिक्, २५ अनुष्टुप् ।

इन्द्रासोमा तपतं रक्ष उब्जतं न्यर्पयतं वृषणा तमोवृधः ।
परा शृणीतमचितो न्योषतं हतं नुदेथां नि शिशीतमत्रिणः १
इन्द्रासोमा समघशंसमभ्य१घं तपुर्ययस्तु चरुरग्निमाँ इव ।
ब्रह्मद्विषे क्रव्यादे घोरचक्षसे द्वेषो धत्तमनवायं किमीदिने २
इन्द्रासोमा दुष्कृतो वव्रे अन्त--रनारम्भणे तमसि प्र विध्यतम् ।
यतो नैषां पुनरेकश्चनोदयत तद्वामस्तु सहसे मन्युमच्छवः ३ ३२८०
इन्द्रासोमा वर्तयतं दिवो वधं सं पृथिव्या अघशंसाय तर्हणम् ।
उत्तक्षतं स्वर्य१ पर्वतेभ्यो येन रक्षो वावृधानं निजूर्वथः ४
इन्द्रासोमा वर्तयतं दिवस्पर्य--ग्नितप्तेभिर्युवमश्महन्मभिः ।
तपुर्वधेभिरजरेभिरत्त्रिणो नि पर्शाने विध्यतं यन्तु निस्वरम् ५
इन्द्रासोमा परि वां भूतु विश्वत इयं मतिः कक्ष्याश्वेव वाजिना ।
यां वां होत्रां परिहिनोमि मेधये--मा ब्रह्माणि नृपती इव जिन्वतम् ६

प्रति स्मरेथां तुजयद्भिरेवै–र्हतं द्रुहो रक्षसो भङ्गुरावतः ।
इन्द्रासोमा दुष्कृते मा सुगं भूद्यो मा कदा चिदभिदासति द्रुहः ७
यो मा पाकेन मनसा चरन्त–मभिचष्टे अनृतेभिर्वचोभिः ।
आप इव काशिना संगृभीता असन्नस्त्वासत इन्द्र वक्ता ८ ३२८५
ये पाकशंसं विहरन्त एवै–र्ये वा भद्रं दूषयन्ति स्वधाभिः ।
अहये वा तान्प्रददातु सोम आ वा दधातु निर्ऋतेरुपस्थे ९
यो नो रसं दिप्सति पित्वो अग्ने अश्वानां गवां यस्तनूनाम् ।
रिपु स्तेन स्तेयकृद्दभ्रमेतु नि ष हीयतां तन्वा३ तना च १०
परः सो अस्तु तन्वा३ तना च तिस्रः पृथिवीरधो अस्तु विश्वाः ।
प्रति शुष्यतु यशो अस्य देवा यो मा दिवा दिप्सति यश्च नक्तम् ११
सुविज्ञानं चिकितुषे जनाय सच्चासच्च वचसी पस्पृधाते ।
तयोर्यत्सत्यं यतरदृजीय–स्तदित्सोमोऽवति हन्त्यासत् १२
न वा उ सोमो वृजिनं हिनोति न क्षत्रियं मिथुया धारयन्तम् ।
हन्ति रक्षो हन्त्यासद्वदन्त–मुभाविन्द्रस्य प्रसितौ शयाते १३ ३२९०
यदि वाहमनृतदेवो अस्मि मोघं वा देवाँ अप्यूहे अग्ने ।
किमस्मभ्यं जातवेदो हृणीषे द्रोघवाचस्ते निर्ऋथं सचन्ताम् १४
अद्या मुरीय यदि यातुधानो अस्मि यदि वायुस्ततप पूरुषस्य ।
अधा स वीरैर्दशभिर्वि यूया यो मा मोघं यातुधानेत्याह १५
यो मायातुं यातुधानेत्याह यो वा रक्षाः शुचिरस्मीत्याह ।
इन्द्रस्तं हन्तु महता वधेन विश्वस्य जन्तोरधमस्पदीष्ट १६
प्र या जिगाति खर्गलेव नक्त–मप द्रुहुस्तन्वं1 गूहमाना ।
ववमनन्तमव सा पदीष्ट ग्रावाणो घ्नन्तु रक्षस उपब्दैः १७
वि तिष्ठध्वं मरुतो विक्ष्वी३च्छत गृभायत रक्षसः सं पिनष्टन ।
वयो ये भूत्वा पतयन्ति नक्तभि–र्ये वा रिपो दधिरे देवे अध्वरे १८ ३२९५
प्र वर्तय दिवोऽश्मानमिन्द्र सोमशितं मघवन्त्सं शिशाधि ।
प्राक्तो अपाक्तो अधरादुदक्तो३ऽभि जहि रक्षसः पर्वतेन १९
एत उ त्ये पतयन्ति श्वयातव इन्द्रं दिप्सन्ति दिप्सवोऽदाभ्यम् ।
शिशीते शक्रः पिशुनेभ्यो वधं नूनं सृजदशनिं यातुमद्भ्यः २०

इन्द्रो यातूनामभवत्पराशरो हविर्मथीनामभ्या३विवासताम् ।
अभीदु शक्रः परशुर्यथा वनं पात्रेव भिन्दन्त्सत एतु रक्षसः २१
उलूकयातुं शुशुलूकयातुं जहि श्वयातुमुत कोकयातुम् ।
सुपर्णयातुमुत गृध्रयातुं दृषदेव प्र मृण रक्ष इन्द्र २२
मा नो रक्षो अभि नड्यातुमाव-दपोच्छन्तु मिथुना ये किमीदिनः ।
पृथिवी नः पार्थिवात्पात्वंहसो ऽन्तरिक्षं दिव्यात्पात्वस्मान् २३ ३३००
इन्द्र जहि पुमांसं यातुधान-मुत स्त्रियं मायया शाशदानाम् ।
विग्रीवासो मूरदेवा ऋदन्तु मा ते दृशन्त्सूर्यमुच्चरन्तम् २४
प्रति चक्ष्व वि चक्ष्वेन्द्र-श्च सोम जागृतम् ।
रक्षोभ्यो वधमस्यत-मशनिं यातुमद्भ्यः २५ × ३३०१

## ( ८ ) इन्द्राविष्णू ।

॥ ३६८ ॥ ( ऋ० १।१५५।१-३ )
( ३३०३-३३०५ ) दीर्घतमा औचथ्यः । जगती ।

प्र वः पान्तमन्धसो धियायते महे शूराय विष्णवे चार्चत ।
या सानुनि पर्वतानामदाभ्या महस्तस्थतुरर्वतेव साधुना १
त्वेषमित्था समरणं शिमीवतो-रिन्द्राविष्णू सुतपा वामुरुष्यति ।
या मर्त्याय प्रतिधीयमानमित् कृशानोरस्तुरसनामुरुष्यथः २
ता ईं वर्धन्ति मह्यस्य पौंस्यं नि मातरा नयति रेतसे भुजे ।
दधाति पुत्रोऽवरं परं पितु-र्नाम तृतीयमधि रोचने दिवः ३ ३३०५

॥ ३६९ ॥ ( ऋ० ६।६९।१-८ ) ( ३३०६-३३१३ ) बार्हस्पत्यो भरद्वाजः । त्रिष्टुप् ।

सं वां कर्मणा समिषा हिनोमी-न्द्राविष्णू अपसस्पारे अस्य ।
जुषेथां यज्ञं द्रविणं च धत्त-मरिष्टैर्नः पथिभिः पारयन्ता १
या विश्वासां जनितारा मतीना-मिन्द्राविष्णू कलशा सोमधाना ।
प्र वां गिरः शस्यमाना अवन्तु प्र स्तोमासो गीयमानासो अर्कैः २
इन्द्राविष्णू मदपती मदाना-मा सोमं यातं द्रविणो दधाना ।
सं वामञ्जन्त्वक्तुभिर्मतीनां सं स्तोमासः शस्यमानास उक्थैः ३
आ वामश्वासो अभिमातिषाह इन्द्राविष्णू सधमादो वहन्तु ।
जुषेथां विश्वा हवना मतीना-मुप ब्रह्माणि शृणुतं गिरो मे ४

× ऋ० ७।१०४।१-२५

इन्द्राविष्णू तत् पनयाय्यं वां सोमस्य मद उरु चक्रमाथे।
अकृणुतमन्तरिक्षं वरीयो ऽप्रथतं जीवसे नो रजांसि ५ ३३१०
इन्द्राविष्णू हविषा वावृधाना ऽग्राद्वाना नमसा रातहव्या।
घृतासुती द्रविणं धत्तमस्मे समुद्रः स्थः कलशः सोमधानः ६
इन्द्राविष्णू पिबतं मध्वो अस्य सोमस्य दस्रा जठरं पृणेथाम्।
आ वामन्धांसि मदिराण्यग्मन्नुप ब्रह्माणि शृणुतं हवं मे ७
उभा जिग्यथुर्न परा जयेथे न परा जिग्ये कतरश्चनैनोः।
इन्द्रश्च विष्णो यदपस्पृधेथां त्रेधा सहस्रं वि तदैरयेथाम् ८ ३३१३

॥ ३७० ॥ ( ऋ० ७।९९।४-६ ) ( ३३१४-३३१६ ) मैत्रावरुणिर्वसिष्ठः त्रिष्टुप्।

उरुं यज्ञाय चक्रथुरु लोकं जनयन्ता सूर्यमुषासमग्निम्।
दासस्य चिद् वृषशिप्रस्य माया जघ्नथुर्नरा पृतनाज्येषु ४
इन्द्राविष्णू दृंहिताः शम्बरस्य नव पुरो नवतिं च श्नथिष्टम्
शतं वर्चिनः सहस्रं च साकं हथो अप्रत्यसुरस्य वीरान् ५
इयं मनीषा बृहती बृहन्तो रुक्रमा तवसा वर्धयन्ती।
ररे वां स्तोमं विदथेषु विष्णो पिन्वतमिषो वृजनेष्विन्द्र ६ ३३१६

## ( ९ ) इन्द्राबृहस्पती।

॥ ३७१ ॥ ( ऋ० ४।४९।१-६ ) ( ३३१७ ३३२४ ) वामदेवो गौतमः। गायत्री।

इदं वामास्ये हविः प्रियमिन्द्राबृहस्पती। उक्थं मदश्च शस्यते १
अयं वां परि षिच्यते सोम इन्द्राबृहस्पती। चारुर्मदाय पीतये २
आ न इन्द्राबृहस्पती गृहमिन्द्रश्च गच्छतम्। सोमपा सोमपीतये ३
अस्मे इन्द्राबृहस्पती रयिं धत्तं शतग्विनम्। अश्वावन्तं सहस्रिणम् ४ ३३२०
इन्द्राबृहस्पती वयं सुते गीर्भिर्हवामहे। अस्य सोमस्य पीतये ५
सोममिन्द्राबृहस्पती पिबतं दाशुषो गृहे। मादयेथां तदोकसा ६

॥ ३७२ ॥ ( ४।५०।१०-११ ) त्रिष्टुप्, १० जगती।

इन्द्रश्च सोमं पिबतं बृहस्पते ऽस्मिन् यज्ञे मन्दसाना वृषण्वसू।
आ वां विशन्त्विन्दवः स्वाभुवो ऽस्मे रयिं सर्ववीरं नि यच्छतम् १०
बृहस्पत इन्द्र वर्धतं नः सचा सा वां सुमतिर्भूत्वस्मे।
अविष्टं धियो जिगृतं पुरंधीर्जजस्तमर्यो वनुषामरातीः ११ ३३२४

॥ ३७३ ॥ ( ऋ० ७।९७-९८।१०, ७ ) ( ३३२५ ) मैत्रावरुणिर्वसिष्ठः । त्रिष्टुप् ।

बृहस्पते युवमिन्द्रश्च वस्वो दिव्यस्येशाथे उत पार्थिवस्य ।
धत्तं रयिं स्तुवते कीरये चिद् यूयं पात स्वस्तिभिः सदा नः ७ ३३२५

॥ ३७४ ॥ ( ऋ० ८।९६।१५ )
( ३३२६ ) तिरश्चीराङ्गिरसो, द्युतानो वा मारुतः । त्रिष्टुप् ।

अध द्रप्सो अंशुमत्या उपस्थे ऽधारयत तन्वं तित्विषाणः ।
विशो अदेवीरभ्याचरन्ती र्बृहस्पतिना युजेन्द्रः ससाहे १५ ३३२६

## (१०) देव-भूमि-बृहस्पतीन्द्राः ।

॥ ३७५ ॥ ( ऋ० ६।४७।२० ) ( ३३२७ ) गर्गो भारद्वाजः । त्रिष्टुप् ।

अगव्यूति क्षेत्रमागन्म देवा उर्वी सती भूमिरंहूरणाभूत् ।
बृहस्पते प्र चिकित्सा गविष्टा वित्था सते जरित्र इन्द्र पन्थाम् २० ३३२७

॥ ३७६ ॥ ( अथर्व- ७।५१।१ ) ( ३३२८ ) अङ्गिराः । त्रिष्टुप् ।

बृहस्पतिर्नः परि पातु पश्चा दुतोत्तरस्मादधरादघायोः ।
इंद्रः पुरस्तादुत मध्यतो नः सखा सखिभ्यो वरीयः कृणोतु १ ३३२८

॥ ३७७ ॥ ( अथर्व० २०।१३।१ ) ( ३३२९ ) जगती ।

इंद्रश्च सोमं पिबतं बृहस्पते ऽस्मिन्यज्ञे मन्दसाना वृषण्वसू ।
आ वां विशन्त्विन्दवः स्वाभुवोऽस्मे रयिं सर्ववीरं नि यच्छतम् १ ३३२९

## (११) इन्द्रापूषणौ ।

॥ ३७८ ॥ (ऋ० ६।५७।१-६) (३३३०-३३३५) बार्हस्पत्यो भरद्वाजः । गायत्री ।

इंद्रा नु पूषणा वयं सख्याय स्वस्तये । हुवेम वाजसातये १ ३३३०
सोममन्य उपासदत् पातवे चम्वोः सुतम् । करम्भमन्य इच्छति २
अजा अन्यस्य वह्नयो हरी अन्यस्य संभृता । ताभ्यां वृत्राणि जिघ्नते ३
यदिन्द्रो अनयद्रितो महीरपो वृषन्तमः । तत्र पूषाभवत् सचा ४
तां पूष्णः सुमतिं वयं वृक्षस्य प्र वयामिव । इंद्रस्य चा रभामहे ५
उत पूषणं युवामहे ऽभीशूँरिव सारथिः । मह्या इंद्रं स्वस्तये ६ ३३३५

॥३७९॥ (अथर्व० ६।३।१) (३३३६) अथर्वा । पथ्या बृहती ।

पातं न इंद्रापूषणा ऽदितिः पान्तु मरुतः । अपां नपात्सिंधवः सप्त पातन पातु नो विष्णुरुत द्यौः १ ३३३६

## (१२) ऋणंचयेन्द्रौ।

॥३८०॥ (ऋ० ५।३०।१२-१५) (३३३७-३३४०) बभ्रुरात्रेयः। त्रिष्टुप्।

भद्रमिदं रुशमा अग्ने अक्रन् गवां चत्वारि ददतः सहस्रा।
ऋणंचयस्य प्रयता मघानि प्रत्यग्रभीष्म नृतमस्य नृणाम् १२
सुपेशसं माव सृजन्त्यस्तं गवां सहस्रै रुशमासो अग्ने।
तीव्रा इंद्रमममन्दुः सुतासो ऽक्तोर्व्युष्टौ परितक्म्यायाः १३
औच्छत् सा रात्री परितक्म्या याँ ऋणंचये राजनि रुशमानाम्।
अत्यो न वाजी रघुरज्यमानो बभ्रुश्चत्वार्यसनत् सहस्रा १४
चतुः सहस्रं गव्यस्य पश्वः प्रत्यग्रभीष्म रुशमेष्वग्ने।
घर्मश्चित् तप्तः प्रवृजे य आसी—दयस्मयस्तम्वादाम विप्राः १५ ३३४०

## (१३) इन्द्र ऋभवश्च।

॥३८१॥ (ऋ० ३।६०।५-७) (३३४१-३३४३) विश्वामित्रो गाथिनः। जगती।

इंद्र ऋभुभिर्वाजवद्भिः समुक्षितं सुतं सोममा वृषस्वा गभस्त्योः।
धियेषितो मघवन् दाशुषो गृहे सौधन्वनेभिः सह मत्स्वा नृभिः ५
इंद्र ऋभुमान् वाजवान् मत्स्वेह नो ऽस्मिन् त्सवने शच्या पुरुष्टुत।
इमानि तुभ्यं स्वसराणि येमिरे व्रता देवानां मनुषश्च धर्मभिः ६
इंद्र ऋभुभिर्वाजिभिर्वाजयन्निह स्तोमं जरितुरुप याहि यज्ञियम्।
शतं केतेभिरिषिरेभिरायवे सहस्रणीथो अध्वरस्य होमनि ७ ३३४३

॥३८२॥ (ऋ० ८।९३।३४) (३३४४) सुकक्ष आङ्गिरसः। गायत्री।

इंद्र इषे ददातु न ऋभुक्षणमृभुं रयिम्। वाजी ददातु वाजिनम् ३४ ३३४४

## (१४) इन्द्रोषसौ।

॥३८३॥ (ऋ० ४।३०।९-११) (३३४५-३३४७) वामदेवो गौतमः। गायत्री।

दिवश्चिद् घा दुहितरं महान् महीयमानाम्। उषासमिन्द्र सं पिणक् ९ ३३४५
अपोषा अनसः सरत् संपिष्टादह बिभ्युषी। नि यत् सीं शिश्नथद् वृषा १०
एतदस्या अनः शये सुसंपिष्टं विपाश्या। ससार सीं परावतः ११ ३३४७

## (१५) इन्द्राश्वौ।

॥३८४॥ (ऋ० ४।३२।२३-२४) (३३४८-३३४९) वामदेवो गौतमः। गायत्री।

कनीनकेव विद्रधे नवे द्रुपदे अर्भके। बभ्रू यामेषु शोभेते २३
अरं म उस्रयाम्णे ऽरमनुस्रयाम्णे। बभ्रू यामेष्वस्रिधा २४ ३३४९

## (१६) इन्द्रस्त्वष्टा।

॥३८५॥ (ऋ० २।३२।२-३) (३३५०-३३५१) गृत्समदः शौनकः। जगती।

मा नो गुह्या रिप आयोरहन् दभन् मा न आभ्यो रीरधो दुच्छुनाभ्यः।
मा नो वि यौः सख्या विद्धि तस्य नः सुम्नायता मनसा तत् त्वेमहे २ ३३५०
अहेळता मनसा श्रुष्टिमा वह दुहानां धेनुं पिप्युषीमसश्चतम्।
पद्याभिराशुं वचसा च वाजिनं त्वां हिनोमि पुरुहूत विश्वहा ३ ३३५१

## (१७) इन्द्रो गावश्च।

॥३८६॥ (ऋ० ६।२८।२,८) (३३५२-३३५३) भरद्वाजो बार्हस्पत्यः। जगती, ८ अनुष्टुप्।

इन्द्रो यज्वने पृणते च शिक्ष—त्युपेद् ददाति न स्वं मुषायति।
भूयोभूयो रयिमिदस्य वर्धय—न्नभिन्ने खिल्ये नि दधाति देवयुम् २
उपेदमुपपर्चन—मासु गोषूप पृच्यताम्। उप ऋषभस्य रेत—स्युपेन्द्र तव वीर्ये ८ ३३५३

## (१८) इन्द्राकुत्सौ।

॥३८७॥ (ऋ० ५।३१।९) (३३५४) अवस्युरात्रेयः। त्रिष्टुप्।

इन्द्राकुत्सा वहमाना रथेना—ऽऽ वामत्या अपि कर्णे वहन्तु।
निः षीमद्भ्यो धमथो निः षधस्था—न्मघोनो हृदो वरथस्तमांसि ९ ३३५४

## (१९) इन्द्रद्यावापृथिव्यः।

॥३८८॥ (ऋ० १०।५९।१०) (३३५५) बन्धुःश्रुतबन्धुर्विप्रबन्धुर्गौपायनाः। त्रिष्टुप् (पंक्त्युत्तरा)।

समिन्द्रेरय गामनड्वाहं य आवहदुशीनराण्या अनः।
भरतामप यद्रपो द्यौः पृथिवि क्षमा रपो मो षु ते किं चनाममत् १० ३३५५

## (२०) इन्द्रापर्वतौ।

॥३८९॥ (ऋ० ३।५३।१) (३३५६) गाथिनो विश्वामित्रः। त्रिष्टुप्।

इन्द्रापर्वता बृहता रथेन वामीरिष आ वहतं सुवीराः।
वीतं हव्यान्यध्वरेषु देवा वर्धेथां गीर्भिरिळया मदन्ता १ ३३५६

## (२१) इन्द्रः, सोमो, ब्रह्मणस्पतिर्दक्षिणा च।

॥३९०॥ (ऋ० १।१८।४-५) (३३५७-३३५८) मेधातिथिः काण्वः। गायत्री।

स घा वीरो न रिष्यति यमिन्द्रो ब्रह्मणस्पतिः। सोमो हिनोति मर्त्यम् ४
त्वं तं ब्रह्मणस्पते सोम इन्द्रश्च मर्त्यम्। दक्षिणा पात्वंहसः ५ ३३५८

## (२२) इन्द्राब्रह्मणस्पती ।

॥३९१॥ (ऋ० २।२४।१२) (३३५९) गृत्समदः शौनकः । त्रिष्टुप् ।

विश्वं सत्यं मघवाना युवोरिदा- पश्चन प्र मिनन्ति व्रतं वाम् ।
अच्छेन्द्राब्रह्मणस्पती हविर्नो ऽन्नं युजेव वाजिना जिगातम् १२ ३३५९

॥३९२॥ (ऋ० ७।९७।३,९) (३३६०–३३६१) मैत्रावरुणिर्वसिष्ठः । त्रिष्टुप् ।

तमु ज्येष्ठं नमसा हविर्भिः सुशेवं ब्रह्मणस्पतिं गृणीषे ।
इन्द्रं श्लोको महि दैव्यः सिषक्तु यो ब्रह्मणो देवकृतस्य राजा ३ ३३६०
इयं वां ब्रह्मणस्पते सुवृक्ति- र्ब्रह्मेन्द्राय वज्रिणे अकारि ।
अविष्टं धियो जिगृतं पुरंधी- र्जजस्तमर्यो वनुषामरातीः ९ ३३६१

## (२३) दुन्दुभीन्द्रौ ।

॥३९३॥ (ऋ० ६।४७।३१) (३३६२) गर्गो भारद्वाजः । त्रिष्टुप् ।

आमूरज प्रत्यावर्तयेमाः केतुमद् दुन्दुभिर्वावदीति ।
समश्वपर्णाश्चरन्ति नो नरो ऽस्माकमिन्द्र रथिनो जयन्तु ३१ ३३६२

## (२४) इन्द्रसूर्यादयः ।

॥३९४॥ (अथर्व० १९।७०।१) (३३६३) ब्रह्मा । गायत्री ।

इन्द्र जीव सूर्य जीव देवा जीवा जीव्यासमहम् । सर्वमायुर्जीव्यासम् १ ३३६३

# इन्द्रदेवता-पुनरुक्त-मन्त्रभागाः।

## ऋग्वेदस्य प्रथमं मण्डलम्।

[३] १।३।६ ( मधुच्छन्दा वैश्वामित्र । इन्द्र )
इन्द्रा याहि तूतुजान उप ब्रह्माणि हरिवः।
सुते दधिष्व नश्चन ।
(२७०८) १०।१०४।६ ( अष्टको वैश्वामित्र । इन्द्र )
उप ब्रह्माणि हरिवो हरिभ्यां सोमस्य याहि
पीतये सुतस्य ।
[४] १।४।१ ( मधुच्छन्दा वैश्वामित्र । इन्द्र )
सुदुघामिव गोदुहे ।
जुहूमसि ।
(५१८) ८।५२ (वालखिल्य ४)।४ (आयु काण्व । इन्द्र )
सुदुघामिव गोदुहे जुहूमसि ।
[६] १।४।३ ( मधुच्छन्दा वैश्वामित्र । इन्द्र )
विद्याम सुमतीनाम् ।
(२६७८) १०।८९।१७ ( रेणुर्वैश्वामित्र । इन्द्र )
विद्याम सुमतीना नवानाम् ।
[७] १।४।४ यस्ते सखिभ्य आ वरम् ।
९।४५।२ ( अयास्य आङ्गिरस । पवमान सोम )
देवान्त्सखिभ्य आ वरम् ।
[९] १।४।६ ( मधुच्छन्दा वैश्वामित्र । इन्द्र )
स्यामदिन्द्रस्य शर्मणि ।
८।४७।५ (त्रित आप्त्य । आदित्या )
[११] १।४।८ ( मधुच्छन्दा वैश्वामित्र । इन्द्र )
प्रावो वाजेषु वाजिनम् ।
(१०८९) १।१७६।५ ( अगस्त्यो मैत्रावरुण । इन्द्र )
[१३] १।४।१० ( मधुच्छन्दा वैश्वामित्र । इन्द्र )
यो रायोऽवनिर्महान्त्सुपारः सुन्वतः सखा।
तस्मा इन्द्राय गायत ।
(१९२) ८।३२।१३ ( मेधातिथि काण्व । इन्द्र )
यो रायोऽवनिर्महान्त्सुपारः सुन्वत सखा ।
तमिन्द्रमभि गायत ।
(१७) १।५।४ ( मधुच्छन्दा वैश्वामित्र । इन्द्र )
तस्मा इन्द्राय गायत ।
[१४] १।५।१ ( मधुच्छन्दा वैश्वामित्र । इन्द्र )
इन्द्रमभि प्र गायत ।
(२३९७) ८।९२।१ (श्रुतकक्ष सुकक्षो वा आङ्गिरसः। इन्द्र )

[१५] १।५।२ ( मधुच्छन्दा वैश्वामित्र । इन्द्र )
पुरूतम पुरूणामीशानं वार्याणाम् ।
इन्द्र सोमे सचा सुते ।
(२०८८) ६।४५।२९ ( शंयुर्बार्हस्पत्य । इन्द्र )
पुरूतम पुरूणा ।
१।२४।३ ( शुनःशेप आजीगर्ति कृत्रिमो देवरातो
वैश्वामित्रो वा । सविता )
ईशान वार्याणाम् ।
(अग्नि १४२१) ८।७१।१३ ( सुदीति-पुरुमीळ्हावाङ्गि-
रसौ, तयोर्वान्यतर । अग्नि )
ईशे यो वार्याणाम् ।
१०।९।५ (त्रिशिरास्त्वाष्ट्र सिन्धुद्वीप आम्बरीषो वा। आपः)
ईशाना वार्याणां ।
(४७१) ८।४५।२९ ( त्रिशोक काण्व । इन्द्रः )
इन्द्र सोमे सचा सुते ।
[१७] १।५।४ (१३) १।४।१०
[१८] १।५।५ ( मधुच्छन्दा वैश्वामित्र । इन्द्र )
सुता इमे शुचयो यन्ति वीतये
सोमासो दध्याशिरः ।
(२४५१) ८।९३।२२ ( सुकक्ष आङ्गिरस । इन्द्र )
सुता इम उशन्तो यन्ति वीतये ।
१।१३७।२ ( परुच्छेपो दैवोदासि । मित्रावरुणौ )
सोमासो दध्याशिरः ।
५।५१।७ ( स्वस्त्यात्रेय । विश्वेदेवा )
सोमासो दध्याशिरः ।
(२२३८) ७।३२।४ ( वसिष्ठो मैत्रावरुणि । इन्द्र )
९।२२।३(असित काश्यपो देवलो वा। पवमान सोम )
९।६३।१५ ( निध्रुवि काश्यप । पवमानः सोम )
९।१०१।१२ ( मनु सावरण । पवमानः सोम )
[२१] १।५।८ ( मधुच्छन्दा वैश्वामित्र । इन्द्र )
त्वां स्तोमा अवीवृधन्त्वामुक्था शतक्रतो ।
त्वां वर्धन्तु नो गिरः ।
(अग्नि १३६१) ८।४४।१९ ( विरूप आङ्गिरस । अग्नि )
त्वामग्ने मनीषिणस्त्वां हिन्वन्ति चित्तिभि ।
त्वां वर्धन्तु नो गिर ।

[२३] १।५।१० ( मधुच्छन्दा वैश्वामित्र । इन्द्र )
**ईशानो यवया वधम् ।**
(२८१८) १०।१५२।५ ( शासो भारद्वाज । इन्द्र )
**वरीयो यवया वधम् ।**
[३०] १।७।३ ( मधुच्छन्दा वैश्वामित्रः । इन्द्रः )
**आ सूर्यं रोहयद्दिवि ।**
... **ऐरयत् ।**
(२३९०) ८।८९।७ ( नृमेध-पुरुमेधावाङ्गिरसौ । इन्द्रः )
**ऐरय आ सूर्यं रोहयो दिवि ।**
९।१०७।७ ( सप्तर्षयः । पवमान सोमः )
**आ सूर्यं रोहयो दिवि ।**
(अग्निः १७०६) १०।१५६।४ ( केतुराग्नेयः । अग्नि )
**आ सूर्यं रोहयो दिवि ।**
[३१] १।७।४ ( मधुच्छन्दा वैश्वामित्र । इन्द्रः )
**उग्र उग्राभिरूतिभिः ।**
(१००४) १।१२९।५ ( परुच्छेपो दैवोदासिः । इन्द्र )
**उग्राभिरुग्रोतिभिः ।**
[३५] १।७।८ ( मधुच्छन्दा वैश्वामित्रः । इन्द्रः )
**ईशानो अप्रतिष्कुतः ।**
(९४३) १।८४।७ ( गोतमो राहूगणः । इन्द्रः )
**ईशानो अप्रतिष्कुतः ।**
[३६] १।७।९ ( मधुच्छन्दा वैश्वामित्रः । इन्द्रः )
**य एकश्चर्षणीनां ।**
(१०८६) १।१७६।२ ( अगस्त्यो मैत्रावरुणः । इन्द्र )
[३७] १।७।१० ( मधुच्छन्दा वैश्वामित्रः । इन्द्र )
**हवामहे जनेभ्यः ।**
**अस्माकमस्तु केवल ।**
(अग्नि १९१५) १।१३।१० ( मेधातिथि काण्व । त्वष्टा )
**ह्वये ।**
**अस्माकमस्तु केवलः ।**
[४१] १।८।४ ( मधुच्छन्दा वैश्वामित्र । इन्द्रः )
**सासह्याम पृतन्यतः ।**
(३१०७) ८।४०।७ ( नाभाकः काण्व । इन्द्राग्नी )
**सासह्याम पृतन्यतो ।**
९।६१।२९ ( अमहीयुराङ्गिरसः । पवमान सोम )
[४२] १।८।५ ( मधुच्छन्दा वैश्वामित्र. । इन्द्रः )
**द्यौर्न प्रथिना शव ।**
(५४४) ८।५६। (वालखिल्यं ८)।१ ( पृषध्रः काण्व । इन्द्रः )
[४४] १।८।७ ( मधुच्छन्दा वैश्वामित्रः । इन्द्रः )
**समुद्र इव पिन्वते ।**

(२९१) ८।१२।५ ( पर्वतः काण्वः । इन्द्रः )
[५०] १।९।३ **स्तोमेभिर्विश्वचर्षणे ।**
(अग्निः ८६५) ५।१४।६ ( सुतंभर आत्रेय । अग्नि )
**स्तोमेभिर्विश्वचर्षणिम् ।**
[५३] १।९।६ ( मधुच्छन्दा वैश्वामित्र । इन्द्रः )
**राये** रमस्वत. ।
**तुविद्युम्न यशस्वत ।**
(अग्नि ५९१) ३।१६।६ ( उत्कीलः कात्य । अग्नि. )
सं **राया** भूयसा सृज मयोभुना **तुविद्युम्न यशस्वता ।**
[५५] १।९।८ ( मधुच्छन्दा वैश्वामित्रः । इन्द्रः )
**अस्मे धेहि श्रवो बृहत् ।**
(अग्निः ८७) १।४४।२ ( प्रस्कण्व काण्व । अग्नि अश्विना, उषा )
(६०९) ८।६५।९ ( प्रगाथ काण्व । इन्द्र )
[५७] १।९।१० ( मधुच्छन्दा वैश्वामित्र । इन्द्रः )
**इन्द्राय शूषमर्चति ।**
१०।९६।२ ( बरुराङ्गिरसः सर्वहरिर्वा ऐन्द्र । हरि )
**इन्द्राय शूषं** हरिवन्त**मर्चत ।**
(२७७८) १०।१३३।१ ( सुदाः पैजवन । इन्द्र )
[६१] १।१०।४ ( मधुच्छन्दा वैश्वामित्रः । इन्द्र. )
**ब्रह्म** च नो वसो सचेन्द्र **यज्ञं च वर्धय ।**
१०।१४१।६ ( अग्निस्तापसः । विश्वेदेवाः )
**ब्रह्म यज्ञं च वर्धय ।**
[६३] १।१०।५ ( मधुच्छन्दा वैश्वामित्र. । इन्द्र )
**उक्थमिन्द्राय शस्य ।**
(१७६४) ५।३९।५ ( अत्रिभौम । इन्द्र )
[६४] १।१०।७ ( मधुच्छन्दा वैश्वामित्र । इन्द्र )
**इन्द्र त्वादातमिद्यशः ।**
**कृणुष्व राधो अद्रिवः ।**
(१३६९) ३।४०।६ ( विश्वामित्रो गाथिन । इन्द्रः )
**इन्द्र त्वादातमिद्यशः ।**
(५८९) ८।६४।१ ( प्रगाथ काण्व । इन्द्र )
**कृणुष्व** . . ।
[६५] १।१०।८ ( मधुच्छन्दा वैश्वामित्र । इन्द्रः )
**ऋघायमाणमिन्वतः ।**
**जेष स्वर्वतीरपः ।**
(१०८५) १।१७६।१ ( अगस्त्यो मैत्रावरुण । इन्द्र )
**ऋघायमाण इन्वसि ।**
(३११०) ८।४०।१० ( नाभाकः काण्व । इन्द्राग्नी )
**तं शिशीता** सुवृक्तिभिस्त्वेषं **सत्वानमृग्मियम् ।**

उतो नु चिद्य ओजसा शुष्णस्याण्डानि भेदति

जेषत्स्वर्वतीरपो नभन्तामन्यके समे ॥

(३१११) ८।४०।११ ( नाभाकः काण्वः । इन्द्राग्नी )

तं शिशीता स्वध्वरं सत्यं सत्वानमृत्वियम् ।

उतो नु चिद्य ओहत आण्डा शुष्णस्य भेदत्यजैः

स्वर्वतीरपो नभन्तामन्यके समे ॥

[६७] १।१०।१० ( मधुच्छन्दा वैश्वामित्रः । इन्द्रः )

वृषन्तमस्य हूमह ऊतिं ।

(१७३८) ५।३५।३ ( प्रभूवसुराङ्गिरसः । इन्द्रः )

वृषन्तमस्य हूमहे ।

[७०] १।११।१ ( जेता माधुच्छन्दसः । इन्द्रः )

रथीतमं रथीनां ।

(४४९) ८।४५।७ ( त्रिशोकः काण्वः । इन्द्रः )

रथीतमो रथीनाम् ।

[७१] १।११।२ ( जेता माधुच्छन्दसः । इन्द्रः )

जेतारमपराजितम् ।

(अग्निः ९१६) ५।२५।६ ( वसूयव आत्रेयाः । अग्निः )

१।११।८ ( जेता माधुच्छन्दसः । इन्द्रः )

इन्द्रमीशानमोजसाभि स्तोमा अनूषत ।

(६२८) ८।७६।१ ( कुरुसुतिः काण्वः । इन्द्रः )

इन्द्रमीशानमोजसा ।

(३०६२) ६।६०।७ ( भरद्वाजो बार्हस्पत्यः । इन्द्राग्नी )

युवामिमे३ऽभि स्तोमा अनूषत ।

१।१५।१ ( मेधातिथिः काण्वः । इन्द्रः [ऋतुदेवता] )

त्वा विशन्त्विन्दवः ।

(२४१८) ८।९२।२२ ( श्रुतकक्षः सुकक्षो वा आङ्गिरसः । इन्द्रः )

आ त्वा ... ।

[८०] १।१६।३ ( मेधातिथिः काण्वः । इन्द्रः )

इन्द्रं प्रातर्हवामह इन्द्रं प्रयत्यध्वरे ।

इन्द्र सोमस्य पीतये ।

(१६०) ८।३।५ ( मेध्यातिथिः काण्वः । इन्द्रः )

इन्द्रमिद्देवतातय इन्द्रं प्रयत्यध्वरे ।

इन्द्रं समीके वनिनो हवामह इन्द्रं धनस्य सातये ।

(१३८५) ३।४२।४ ( विश्वामित्रो गाथिनः । इन्द्रः )

इन्द्र सोमस्य पीतये स्तोमैरिह हवामहे ।

(४०८) ८।१७।१५ ( इरिम्बिठिः काण्वः । इन्द्रः )

इन्द्र सोमस्य पीतये ।

(२४०१) ८।९२।५ (श्रुतकक्षः सुकक्षो वा आङ्गिरसः । इन्द्रः)

इन्द्र सोमस्य पीतये ।

(९८६) ८।९७।११ ( रेभः काश्यपः । इन्द्रः )

इन्द्र सोमस्य पीतये ।

९।१२।२ ( असितः काश्यपो देवलो वा । पवमानः सोमः )

इन्द्र सोमस्य पीतये ।

[८१] १।१६।४ ( मेधातिथिः काण्वः । इन्द्रः )

उप नः सुतमा गहि हरिभिरिन्द्र ।

(१३८२) ३।४२।१ ( विश्वामित्रो गाथिनः । इन्द्रः )

उप नः सुतमा गहि सोममिन्द्र गवाशिरम् ।

हरिभ्यां ।

५।७१।३ ( बाहुवृक्त आत्रेयः । मित्रावरुणौ )

उप नः सुतमा गतं ।

[८२] १।१६।५ ( मेधातिथिः काण्वः । इन्द्रः )

आ गह्युपेदं सवनं सुतम् ।

(३००५) १।२१।४ ( मेधातिथिः काण्वः । इन्द्राग्नी )

उपेदं सवनं सुतम् ।

इन्द्राग्नी एह गच्छताम् ।

(३०६४) ६।६०।९ ( भरद्वाजो बार्हस्पत्यः । इन्द्राग्नी )

आ गच्छतं नरेमेदं सवनं सुतम् ।

इन्द्राग्नी ।

[८३] १।१६।६ इमे सोमास इन्दवः ।

९।४६।३ ( अयास्य आङ्गिरसः । पवमानः सोमः )

एते सोमास इन्दवः ।

[८५] १।१६।८ ( मेधातिथिः काण्वः । इन्द्रः )

वृत्रहा सोमपीतये ।

(२४४९) ८।९३।२० ( सुकक्ष आङ्गिरसः । इन्द्रः )

[८६] १।१६।९ ( मेधातिथिः काण्वः । इन्द्रः )

सेमं नः काममा पृण ।

(५९४) ८।६४।६ (प्रगाथः काण्वः । इन्द्रः)

अस्माकं काममा पृण ।

[६८८-६९१] १।२८।१-४ शुनःशेप आजीगर्तिः स कृत्रिमो विश्वामित्रो देवरातः । इन्द्रः )

उलूखलसुतानामवेद्विन्द्र जल्गुलः ।

[६९२] १।२९।१ ( शुनःशेप आजीगर्तिः । इन्द्रः )

अनाशस्ताइव स्मसि ।

आ तू न इन्द्र शंसय ।

२।४१।१६ ( गृत्समदः शौनकः । सरस्वती )

अप्रशस्ताइव स्मसि प्रशस्तिम् ।

[६९३] १।२९।२ ( शुनःशेप आजीगर्तिः । इन्द्रः )

शिप्रिन् वाजानां पते ।

आ तू न इन्द्र शंसय ।

(२०६९) ६।४५।१० ( शंयुर्बार्हस्पत्यः । इन्द्रः )
इन्द्र वाजानां पते ।
[७०५] १।३०।७ ( शुनःशेप आजीगर्तिः । इन्द्रः )
सखाय इन्द्रमूतये ।
(४२७) ८।२१।९ ( सोभरिः काण्वः । इन्द्रः )
[७०६] १।३०।८ ( शुनःशेप आजीगर्तिः । इन्द्रः )
सहस्रिणीभिरूतिभिः ।
(२७८८) १०।१३४।४ (पूर्वार्धः) मान्धाता यौवनाश्वः । इन्द्रः )
[७०७] १।३०।९ ( शुनःशेप आजीगर्तिः । इन्द्रः )
अनु प्रत्नस्यौकसो । य ते पूर्वं ॥
(२३२०) ८।६९।१८ ( प्रियमेध आङ्गिरसः । इन्द्रः )
अनु प्रत्नस्यौकसः । पूर्वां ।
[७०८] १।३०।१० ( शुनःशेप आजीगर्तिः । इन्द्रः )
सखे वसो जरितृभ्यः ।
(१४३९) ३।५१।६ ( विश्वामित्रो गाथिनः । इन्द्रः )
सखे वसो जरितृभ्यो वयो धाः ।
(अग्नि १४१७) ८।७१।९ (सुदीति-पुरुमीळ्हावाङ्गिरसौ तयोर्वान्यतरः । अग्निः )
[७१५] १।३२।१ ( हिरण्यस्तूप आङ्गिरसः । इन्द्रः )
इन्द्रस्य नु वीर्याणि प्र वोचं ।
(१२१९) २।२१।३ (गृत्समदः शौनकः । इन्द्रः )
इन्द्रस्य वोचं प्र कृतानि वीर्या ।
[७१७] १।३२।३ ( हिरण्यस्तूप आङ्गिरसः । इन्द्रः )
त्रिकद्रुकेष्वपिबत्सुतस्य ।
अहन्नेनं प्रथमजामहीनाम् ।
(११६२) २।१५।१ ( गृत्समदः शौनकः । इन्द्रः )
त्रिकद्रुकेष्वपिबत्सुतस्यास्य मदे अहिमिन्द्रो जघान ।
[७१८] १।३२।४ आत्सूर्यं जनयन्द्यामुषासं ।
(१९७२) ६।३०।५ साकं सूर्यं --- ।
[७१९] १।३२।५ अहिः शयत उपपृक्पृथिव्याः ।
(२६७५) १०।८९।१४ पृथिव्या आपृगमुया शयन्ते ।
[७२६] १।३२।१२ ( हिरण्यस्तूप आङ्गिरसः । इन्द्रः )
अवासृजः सर्तवे सप्त सिन्धून् ।
(११३३) २।१२।१२ ( गृत्समदः शौनकः । इन्द्रः )
अवासृजत् सर्तवे--- ।
[७२९] १।३२।१५ अरान्न नेमिः परि ता बभूव ।
(अग्निः ३१३) १।१४१।९ (दीर्घतमा औचथ्यः । अग्निः )
अरान्न नेमिः परिभूरजायथा ।
[७३४] १।३३।५ प्र यद्दिवो हरिवः स्थातरुग्र ।
(१९९५) ६।४१।३ एतं पिब हरिवः स्थातरुग्र ।
[७४१] १।३३।१२ ( हिरण्यस्तूप आङ्गिरसः । इन्द्रः )
यावत्तरो मघवन् यावदोजो ।
(३३३७) ७।९१।४ ( वसिष्ठो मैत्रावरुणिः । इन्द्रवायू )
यावत्तरस्तन्वो३ यावदोजो ।
[७४३] १।३३।१४ ( हिरण्यस्तूप आङ्गिरसः । इन्द्रः )
आवः कुत्समिन्द्र यस्मिञ्चाकन् प्रावो युध्यन्तं वृषभं दशद्युम् ।
(१०७३) १।१७४।५ ( अगस्त्यो मैत्रावरुणिः । इन्द्रः )
वह कुत्समिन्द्र यस्मिञ्चाकन् ।
(१९५०) ६।२६।४ (भरद्वाजो बार्हस्पत्यः । इन्द्रः )
आवो युध्यन्तं वृषभं दशद्युम् ।
[७४७] १।५१।३ ( सव्य आङ्गिरसः । इन्द्रः )
त्वं गोत्रमङ्गिरोभ्योऽवृणोरपोत ।
९।८६।२३ ( पृश्नयोऽजाः । पवमानः सोमः )
सोम गोत्रमङ्गिरोभ्योऽवृणोरप ।
[७५०] १।५१।६ अरन्धयोऽतिथिग्वाय शम्बरम् ।
(१०१७) १।१३०।७ अतिथिग्वाय शम्बरम् ।
[७५२] १।५१।८ शाकी भव यजमानस्य चोदिता ।
(२५९०) १०।४९।१ ( वैकुण्ठ इन्द्रः । इन्द्रः )
अहं भुवं यजमानस्य चोदिता ।
[७५७] १।५१।१३ ( सव्य आङ्गिरसः । इन्द्रः )
-- सुन्वते ।
विश्वेत्ता ते सवनेषु प्रवाच्या ।
(९९६) ८।१००।६ (नेमो भार्गवः । इन्द्रः )
विश्वेत्ता ते सवनेषु प्रवाच्या . सुन्वते ।
१०।३९।४ ( घोषा काक्षीवती । अश्विनौ )
विश्वेत्ता वां सवनेषु प्रवाच्या ।
[७६०] १।५२।१ इन्द्रं ववृत्यामवसे सुवृक्तिभिः ।
१।१६८।१ ( अगस्त्यो मैत्रावरुणिः । मरुतः )
मह ववृत्यामवसे--- ।
[७६१] १।५२।२ इन्द्रो यद्वृत्रमवधीन्नदीवृतम् ।
(३१३) ८।१२।२६ यदा वृत्रं नदीवृतं शवसा वज्रिन्नवधी ।
[७६४,७७३] १।५२।५,१४ अभि (१४ नीत) स्ववृष्टिं मदे अस्य युध्यतो ।
[७७४] १।५२।१५ ( सव्य आङ्गिरसः । इन्द्रः )
विश्वे देवासो अमदन्ननु त्वा ।
(८४५) १।१०३।७ (कुत्स आङ्गिरसः । इन्द्रः)
[७८५] १।५३।११ (सव्य आङ्गिरसः । इन्द्रः)
त्वां स्तोषाम त्वया सुवीरा द्राघीय आयुः प्रतरं दधानाः ।

(अग्नि १६७३।१०।११५।८ (उपस्तुतो वार्ष्टिहव्य । अग्नि )
[७८८] १।५४।३ **स्वक्षत्रं** यस्य धृष्णतो **धृषन्मनः** ।
(१७३९। ५।३५।४ **स्वक्षत्रं** ते **धृषन्मनः** ।
[७८९] १।५४।४ (सव्य आङ्गिरस । इन्द्र.)
त्वं दिवो **बृहतः** सानु कोपयो ऽव **त्मना धृषता**
**शम्बरं भिनत्** ।
(२१३८) ७।१८।२० (वसिष्ठो मैत्रावरुणि. । इन्द्र.)
आव त्मना **बृहतः शम्बरं भेत्** ।
[७९६] १।५४।११ (सव्य आङ्गिरसः । इन्द्र )
**रक्षा च नो मघोनः पाहि सूरीन्** राये ।
१०।६१।२२ (नाभानेदिष्ठो मानवः । विश्वेदेवा )
— **सूरीन्** ।
[७९८] १।५५।२ (सव्य आङ्गिरस. । इन्द्र )
**इन्द्रः सोमस्य पीतये** वृषायते ।
(७९९) ८।१२।१२ (पर्वत काण्व । इन्द्र.)
**इन्द्र. सोमस्य पीतये** ।
[८०३] १।५६।२ (सव्य आङ्गिरस । इन्द्र.)
**समुद्रं न सचरणे सनिष्यवः** ।
४।५५।६ (वामदेवो गौतम. । विश्वेदेवा.)
[८०८] १।५६।४ इन्द्र **सिषक्त्युषसं न सूर्यः** ।
९।८४।२ (प्रजापतिर्वाच्य. । पवमान सोम.)
इन्दुः **सिषक्त्युषसं न सूर्यः** ।
[८०९] १।५६।५ (सव्य आङ्गिरसः । इन्द्र.)
अहन् **वृत्रं निरपामौब्जो अर्णवम्** ।
१।८५।९ (गोतमो राहूगणः । मरुतः )
**अहन् वृत्रं निरपामौब्जदर्णवम्** ।
[८६०] १।६१।५ अस्मा इदु **सप्तिमिव श्रवस्या** ।
९।९६।१६ (प्रतर्दनो दैवोदासि । पवमानः सोमः)
अभि वाज **सप्तिरिव श्रवस्या** ।
[८७३] १।६२।२ (नोधा गौतमः । इन्द्र )
**येना नः पूर्वे पितरः पदज्ञा** अर्चन्तो अङ्गिरसो
**गा** अविन्दन ।
९।९७।३९ (पराशर शाक्त्यः । पवमान सोम.)
**येना नः पूर्वे पितरः पदज्ञाः** स्वर्विदो अभि
**गा** अद्रिमुष्णन ।
[८७४] १।६२।३ (नोधा गौतमः । इन्द्रः)
**बृहस्पतिर्भिनदद्रिं विदद्गाः** ।
१०।६८।११ (अयास्य आङ्गिरसः । बृहस्पति )
[८८३] १।६२।१२ (नोधा गौतमः । इन्द्रः)
**शिक्षा शचीवस्तव नः शचीवभिः** ।

(१३०) ८।२।१५ (मेधातिथिः काण्वः
प्रियमेधश्चाङ्गिरसः । इन्द्र )
**शिक्षा शचीवः शचीभिः** ।
[८९१] १।६३।७ (नोधा गौतमः । इन्द्र.)
यद्ध राजन **वरिवः पूरवे कः** ।
(१५५३) ४।२१।१० (वामदेवो गौतमः । इन्द्रः)
सम्राडदन्ता वृत्र **वरिवः पूरवे कः** ।
[९००-९१६] १।८०।१–१६ **अर्चन्ननु स्वराज्यम्** ।
[९०५] १।८०।६ (गोतमो राहूगणः । इन्द्र.)
जिघ्नते **वज्रेण शतपर्वणा** ।
(२४८) ८।६।६ (वत्स. काण्व. । इन्द्र )
**वज्रेण शतपर्वणा** । शिरो बिभेद ॥
(६२९) ८।७६।२ (कुरुसुति. काण्व. । इन्द्र )
आभिर्नाच्छर. ।
**वज्रेण शतपर्वणा** ।
(२३८६) ८।८९।३ (नृमेध–पुरुमेधावाङ्गिरसा । इन्द्रः)
वृत्र **हनति** वृत्रहा शतक्रतुर्**वज्रेण शतपर्वणा** ।
[९०७] १।८०।८ महत्त **इन्द्र वीर्यं** ।
(५३९) ८।५५। (वाल० ७)१ भूरीदिन्**द्रस्य वीर्यम्** ।
[९०८] १।८०।९ (गोतमो राहूगण. । इन्द्रः)
**इन्द्राय ब्रह्मोद्यतम्** ।
(२३१२) ८।६९।९ (प्रियमेध आङ्गिरस । इन्द्र )
[९०९] १।८०।१० **महत्तदस्य पौंस्य** ।
(५८०) ८।६३।३ (प्रगाथः काण्व. । इन्द्रः)
स्तुषे **तदस्य पौंस्यम्** ।
[ ] १।८०।१० (गोतमो राहूगण । इन्द्र.)
**वृत्रं जघन्वाँ असृजद्** ।
(१५१५) ४।१८।७ (वामदेवो गौतमः अदितिः
ऋषिका । इन्द्र, वामदेवः)
...**असृजद्धि सिन्धून्** ।
(१५२९) ४।१९।८ (वामदेवो गौतमः । इन्द्रः)
[९२०] १।८१।५ **आ पप्रौ पार्थिवं रजो** ।
६।६१।११ (भरद्वाजो बार्हस्पत्यः । सरस्वती )
**आपप्रुषी पार्थिवान्युरु रजो** अन्तरिक्षम् ।
[ ] १।८१।५ (गोतमो राहूगणः । इन्द्रः)
**न त्वावाँ इन्द्र कश्चन न जातो न जनिष्यते** ।
(२२५७) ७।३२।२३ (वसिष्ठो मैत्रावरुणिः । इन्द्र )
**न त्वावाँ** अन्यो दिव्यो **न** पार्थिवो **न जातो**
**न जनिष्यते** ।

[९२०] १।८१।५ अति विश्वं ववक्षिथ ।
(८३५) १।१०२।८ अतीदं विश्वं भुवनं ववक्षिथ ।
[९२३] १।८१।८ अथा नोऽविता भव ।
१।९१।९ ( गोतमो राहूगणः । सोमः )
ताभिर्नोऽविता भव ।
[९२४] १।८१।९ ( गोतमो राहूगणः । इन्द्रः )
विश्वं पुष्यन्ति वार्यम् ।
अदाशुषां तेषां नो वेद आ भर ।
(अग्निः ८०६) ५।६।६ ( वसुश्रुत आत्रेयः । अग्निः )
विश्व —
(२७७९) १०।१३३।२ ( सुदाः पैजवनः । इन्द्रः )
विश्वं पुष्यसि वार्यं ।
(४५७) ८।४५।१५ ( त्रिशोकः काण्वः । इन्द्रः )
अदाशुरि ... ।
तस्य नो वेद आ भर ।
[९२५-२९] १।८२।१-५ योजा न्विन्द्र ते हरी ।
[९२६] १।८२।२ ( गोतमो राहूगणः । इन्द्रः )
विप्रा नविष्ठया मती ।
८।२५।२४ ( विश्वमना वैयश्वः । मित्रावरुणौ )
[९२७] १।८२।३ ( गोतमो राहूगणः । इन्द्रः )
सुसंदृशं त्वा वयं ।
१०।१५८।५ ( चक्षुः सौर्यः । सूर्यः )
[९३१] १।८३।१ अश्वावति प्रथमो गोषु गच्छति ।
२।२५।४ ( गृत्समदः शौनकः । ब्रह्मणस्पतिः )
स सत्वभिः प्रथमो गोषु गच्छति ।
[९३८] १।८४।२ ऋषीणां च स्तुतीरुप ।
(३९७) ८।१७।४ ( इरिम्बिठिः काण्वः । इन्द्रः )
अस्माकं सुष्टुतीरुप ।
[९३९] १।८४।३ ( गोतमो राहूगणः । इन्द्रः )
अर्वाचीनं सु ते मनो ग्रावा कृणोतु वग्नुना ।
(१३३५) ३।३७।२ ( विश्वामित्रो गाथिनः । इन्द्रः )
अर्वाचीनं सु ते मन ।
इन्द्र कृण्वन्तु ... ।
[९४०] १।८४।४ ( गोतमो राहूगणः । इन्द्रः )
इममिन्द्र सुतं पिब ।
(२७८) ८।६।३६ ( वत्सः काण्वः । इन्द्रः )
[९४३] १।८४।७ ( गोतमो राहूगणः । इन्द्रः )
वसु मर्ताय दाशुषे ।
९।९८।४ ( अम्बरीषो वार्षागिरः ऋजिश्वा भारद्वाजश्च । पवमानः सोमः )

[९४३] १।८४।७ ईशानो अप्रतिष्कुत इन्द्रो अङ्ग ।
(३५) १।७।८ ( मधुच्छन्दा वैश्वामित्रः । इन्द्रः )
ईशानो अप्रतिष्कुतः ।
[९४५] १।८४।९ ( गोतमो राहूगणः । इन्द्रः )
सुतावाँ आविवासति ।
(९७९) ८।९७।४ ( रेभः काश्यपः । इन्द्रः )
सुतावाँ आ विवासति ।
[९४६ ९४८] १।८४।१०-१२ वस्वीरनु स्वराज्यम् ।
[९४७] १।८४।११ ( गोतमो राहूगणः । इन्द्रः )
ता अस्य पृशनायुवः सोमं श्रीणन्ति पृश्नयः ।
(२३०६) ८।६९।३ ( प्रियमेध आङ्गिरसः । इन्द्रः )
ता अस्य सूददोहसः सोमं श्रीणन्ति पृश्नयः ।
[९४९] १।८४।१३ जघान नवतीर्नव ।
९।६१।१ ( अमहीयुराङ्गिरसः । पवमानः सोमः )
अवाहन्नवतीर्नव ।
[९५०] १।८४।१४ ( गोतमो राहूगणः । इन्द्रः )
पर्वतेष्वपश्रितम् ।
५।६१।१९ ( श्यावाश्व आत्रेयः । रथवीतिर्दार्भ्यः )
[९५५] १।८४।१९ न त्वदन्यो मघवन्नस्ति मर्डिता ।
(६२५) ८।६६।१३ ( कलिः प्रागाथः । इन्द्रः )
नहि त्वदन्यः पुरुहूत कश्चन मघवन्नस्ति मर्डिता ।
[९५७-९७१] १।१००।१-१५ (वार्षागिराः ऋज्राश्वाम्बरीष-सहदेव-भयमान-सुराधसः । इन्द्रः )
मरुत्वान्नो भवत्विन्द्र ऊती ।
[९६७] १।१००।११ ( ऋज्राश्वाऽम्बरीष० । इन्द्रः )
अपां तोकस्य तनयस्य जेषे ।
(२०५३) ६।४४।१८ ( शंयुर्बार्हस्पत्यः । इन्द्रः )
[९६८] १।१००।१२ ( ऋज्राश्वाऽम्बरीष० । इन्द्रः )
सहस्रचेताः शतनीथ ऋभ्वा ।
(अग्निः १६३१) १०।६९।७ (सुमित्रो वाध्र्यश्वः । अग्निः )
सहस्रस्तरीः शतनीथ ऋभ्वा ।
[९७१] १।१००।१५ आपश्चन शवसो अन्तमापुः ।
१।१६७।९ ( अगस्त्यो मैत्रावरुणिः । मरुतः )
आरात्ताच्चिच्छवसो अन्तमापुः ।
[९७१] १।१००।१९ ( ऋज्राश्वाऽम्बरीष० । इन्द्रः )
(८३८) १।१०२।११ ( कुत्स आङ्गिरसः । इन्द्रः )
विश्वाहेन्द्रो अधिवक्ता नो अस्त्वपरिह्वृताः
सनुयाम वाजम् ।
तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः
पृथिवी उत द्यौः ॥

[८२३] १।१०१।१-७ मरुत्वन्त सख्याय हवामहे ।

[८२४ २५] १।१०१।८-९ त्वाया हविश्चकृमा सत्यराधः ।
( ९ ब्रह्मवाहः )

[८३१] १।१०२।४ ( कुत्स आङ्गिरस । इन्द्र. )
अस्मभ्यमिन्द्र वरिव. सुगं कृधि प्र शत्रूणा
मघवन् वृष्ण्या रुज ।

(२०५३) ६।४४।१८ ( शयुर्बार्हस्पत्यः । इन्द्र. )
मघवन्निन्द्र वृष्ण्या स्मभ्यं महि वरिवः सुगं कः ।

[८३५] १।१०२।८ अतीद विश्व भुवन ववक्षिथ ।
(९२०) १।८१।५ ( गोतमो राहूगणः । इन्द्रः )
अति विश्वं ववक्षिथ ।

[ ' ] १।१०२।८ ( कुत्स आङ्गिरस । इन्द्रः )
अशत्रुरिन्द्र जनुषा सनादसि ।
(४११) ८।२१।१३ ( सोभरि काण्वः । इन्द्र. )
अनापिरिन्द्र— ।
(२७७९) १०।१३३।२ ( सुदाः पजवनः । इन्द्र. )
अशत्रुरिन्द्र जज्ञिषे ।

[८३८] १।१०२।११ = (९७५) १।१००।१९

[८४०] १।१०३।२ ( कुत्स आङ्गिरसः । इन्द्रः )
स धारयत् पृथिवीं पप्रथच्च ।
(११६३) २।१५।२ ( गृत्समदः शौनकः । इन्द्र. )

[८४५] १।१०३।७=(७७४) १।५१।१५

[८४७] १।१०४।१ ( कुत्स आङ्गिरस. । इन्द्र. )
योनिष्ट इन्द्र निषदे अकारि तमा ।
(२१८६) ७।२४।१ ( वसिष्ठो मैत्रावरुणि । इन्द्रः )
—इन्द्र सदने अकारि तमा ।

[८५४] १।१०४।८ ( कुत्स आङ्गिरसः । इन्द्रः )
मा नो वधीरिन्द्र मा परा दा मा ।
७।४६।४ ( वसिष्ठो मैत्रावरुणिः । रुद्रः )
मा नो वधी रुद्र मा परा दा मा ।

[८५५] १।१०४।९ उरुव्यचा जठर आ वृषस्व ।
१०।९६।१३ ( बरुराङ्गिरसः, सर्वहरिर्वा ऐन्द्रः । हरि )
सत्रा वृषञ्जठर आ वृषस्व

[१००१] १।१२९।२ पृक्षमत्यं न वाजिनम् ।
(३२१६) १।१३५।५ (परुच्छेपो दैवोदासिः । इन्द्रवायू)
आशुमत्य— ।

[१००२] १।१२९।३ (परुच्छेपो दैवोदासि । इंद्रः)
मित्राय वोचं वरुणाय सप्रथ. सुमृळीकाय
सप्रथः ।

१।१३६।६ ( परुच्छेपो दैवोदासिः । मित्रावरुणौ )
मित्राय वोचं वरुणाय मीळहुषे सुमृळीकाय मीळहुषे ।

[१००४] १।१२९।५ उग्राभिरुग्रोतिभिः। पश्य-(३१)१।७ ४

[१००८] १।१२९।९ (परुच्छेपो दैवोदासिः । इंद्रः )
त्वं न इन्द्र राया परीणसा ।
अभिष्टिभि. सदा पाह्यभिष्टिभिः ।
(१६४१) ४।३१।१२ (वामदेवो गौतम. । इद्रः )
एन्द्र राया परीणसा ।
(९८१) ८।९७।६ ( रेभः काश्यपः । इंद्रः )
१०।९३।११ ( तान्वः पार्थ्यः । विश्वेदेवा )
अभिष्टये सदा पाह्यभिष्टये ।

[१०११] १।१३०।१ ( परुच्छेपो दैवोदासिः । इन्द्रः )
मंहिष्ठ वाजसातये ।
८।४।१८ ( देवातिथिः काण्व. । पूषा )
अस्माकं — भव मंहिष्ठो वाजसातये ।
(८९९) ८।८८।६ ( नोधा गौतमः । इन्द्रः )

[१०१६] १।१३०।६ ( परुच्छेपो दैवोदासि । इन्द्रः )
— वाच — रथं न धीरः स्वपा अतक्षिषुः ।
(अग्निः ७७७) ५।२।११ ( कुमार आत्रेय, वृषो वा
जान उभौ वा, २ वृशो जानः । अग्निः )
— स्तोमं — रथं न धीरः स्वपा अतक्षम् ।
(१६८१) ५।२९।१५ ( गौरिवीतिः शाक्त्यः । इन्द्रः )
ब्रह्म ।
रथं न धीर. स्वपा अतक्षम् ।

[१०१७] १।१३०।७ अतिथिग्वाय शम्बर ।
पश्य- (७५०) १।५१।६

[१०१८] १।१३०।८ ( परुच्छेपो दैवोदासि । इन्द्रः )
न्यर्शसानमोषति ।
(२९६) ८।१२।९ ( पर्वतः काण्व । इद्रः )

[१०१९] १।१३०।९ (परुच्छेपो दैवोदासिः । इंद्रः)
उशना यत् परावतो ।
८।७।२६ ( पुनर्वत्सः काण्वः । मरुत )

[१०२१] १।१३१।१ = (३०९) ८।१२।२२
देवासो दधिरे पुरः ।
(अग्निः ८७१) ५।१६।१ (पुरुरात्रेयः । अग्निः)
मर्तासो दधिरे पुरः ।
(३११) ८।१२।२५ देवास्त्वा दधिरे पुरः ।

[१०२४] १।१३१।४ पुरो यदिंद्र शारदीरवातिरः । '
(१०७०) १।१७४।२= (१८९३) ६।२०।१०
सप्त यत्पुरः शर्म शारदीर्दर्त् ।

[१०२८] १।१३३।१ ( परुच्छेपो दैवोदासि. । इंद्रः)
इंद्रत्वोता. सासह्याम पृतन्यतो वनुयाम वनुष्यतः।
(३१०७) ८।४०।७ ( नाभाकः काण्वः। इन्द्राग्नी )
सासह्याम—।
[१०३१] १।१३३।४ यदङ्गिरोभ्योऽवृणोरप व्रजम्।
(७४७) १।५१।३ त्वं गोत्रमङ्गिरोभ्योऽवृणोरप।
[१०३२] १।१३३।५ ( परुच्छेपो दैवोदासि । इद्रः )
धीतयो देवाँ अच्छा न धीतयः।
१।१३९।१ ( परुच्छेपो दैवोदासिः। विश्वेदेवा )
[१०४०] १।१३३।७ ( परुच्छेपो दैवोदासिः।इन्द्र )
सहस्रा वाज्यवृतः।
(१९७) ८।३२।१८ ( मेधातिथिः काण्वः। इन्द्रः )
[१०४१] १।१३९।६ ( परुच्छेपो दैवोदासि. । इंद्रः )
सुमृळीको न आ गहि ।
१।९१।११ ( गोतमो राहूगण । सोमः)
सुमृळीको न आ विश ।
[१०४२] १।१६७।१ सहस्रिण उप नो यन्तु वाजाः।
(२२०२) ७।२६।५ —नो माहि वाजान्।
[१०४७] १।१६९।५ त्वे पु णो मरुतो मृळयन्तु।
(३२६५) १।१७१।३ ( अगस्त्यो मैत्रावरुणः।
मरुत्वानिंद्रः)
स्तुतासो नो मरुतो मृळयन्तु।
[१०५५] १।१७०।५ ( अगस्त्यो मैत्रावरुणः। इंद्र. )
त्वमीशिषे वसुपते वसूनां।
(अग्निः १४१६) ८।७१।८ ( सुदीति–पुरुमीळहावाङ्गिरसौ.
तयोर्वान्यतर·। अग्निः )
त्वमीशिषे वसूनाम्।
[१०७०] १।१७४।२ ( अगस्त्यो मैत्रावरुण. । इंद्र. )
मृध्रवाच सप्त यत्पुरः शर्म शारदीर्दर्त।
(१८९३) ६।२०।१० ( भरद्वाजो बार्हस्पत्यः। इन्द्रः )
सप्त यत्पुरः शर्म शारदीर्दर्दन् दासी. पुरुकुत्साय।
[१०७३] १।१७४।५ = (७४३) १।३३।१४
[ " ] १।१७४।५ ( अगस्त्यो मैत्रावरुणः। इन्द्रः)
प्र सूरश्चक्रं वृहतादभीके।
(१४७८) ४।१६।१२ (वामदेवो गौतमः। इन्द्रः)
[१०७६] १।१७४।८ ( अगस्त्यो मैत्रावरुणः। इन्द्र·)
ननमो वधरदेवस्य पीयोः।
(११०५) २।१९।७ ( गृत्समदः शौनकः। इद्रः )
[१०७७] १।१७४।९ ( अगस्त्यो मैत्रावरुणः। इंद्र )
(१८९५) ६।२०।१२ ( भरद्वाजो बार्हस्पत्य· । इंद्रः )

त्वं धुनिरिन्द्र धुनिमतीर्ऋणोरपः सीरा न स्रवंतीः।
प्र यत्समुद्रमति शूर पर्षि पारया तुर्वशं यदुं स्वस्ति॥
[१०८०] १।१७५।२ वृषा मदो वरेण्यः।
(१८२४) ८।४६।८ यस्ते मदो वरेण्य ।
[१०८१] १।१७५।३ ( अगस्त्यो मैत्रावरुणः। इन्द्रः )
सहावान् दस्युमव्रतम्।
९।४१।२ ( मेध्यातिथिः काण्व· । पवमानः सोमः )
साह्वांसो दस्युमव्रतम्।
[१०८३]१।१७५।५शुष्मिन्तमो हि ते मदो द्युम्निन्तम उत क्रतु
(अग्निः २८०) १।१२७।९ (परुच्छेपो दैवोदासिः। अग्निः)
[१०८४] १।१७५।६ =
(१०९०)१।१७६।६ ( अगस्त्यो मैत्रावरुण. । इन्द्रः )
यथा पूर्वेभ्यो जरितृभ्य इन्द्र मयइवापो न
तृष्यते बभूथ। तामनु त्वा निविद जोहवीमि
विद्यामेष वृजनं जीरदानुम्॥
[१०८५] १।१७६।१ ( अगस्त्यो मैत्रावरुणः। इन्द्रः। )
इन्द्रमिन्दो वृषा विश।
९।२।१ ( मेधातिथि काण्व । पवमान. सोम )
[ " ] १।१७६।१ ऋघायमाण इन्वसि।
(६५) १।१०।८ —मिन्वतः।
[१०८६] १।१७६।२ = (३६) १।७।९
[ " ] १।१७६।२ ( अगस्त्यो मैत्रावरुणः। इन्द्र )
यवं न चर्षकृद् वृषा।
१।२३।१५ ( मेधातिथि. काण्वः। पूषा )
[१०८७] १।१७६।३ ( अगस्त्यो मैत्रावरुण । इन्द्र· )
यस्य विश्वानि हस्तयोः।
(२०६७) ६।४५।८ ( शयुर्बार्हस्पत्यः। इन्द्रः )
[१०८९] १।१७६।५ = (११) १।४।८
[१०९०] १।१७६।६ = (१०८४) १।१७५।६
[१०९१] १।१७७।१ ( अगस्त्यो मैत्रावरुण. । इन्द्रः )
राजा कृष्टीनां पुरुहूत इन्द्रः।
(१४९१) ४।१७।५ ( वामदेवो गौतम । इन्द्रः )
[ " ] १।१७७।१ युक्त्वा हरी वृषणा याह्यर्वाङ्।
(१७६८) ५।४०।४ युक्त्वा हरिभ्यामुप यासदर्वाङ्।
[१०९३] १।१७७।३ ( अगस्त्यो मैत्रावरुण. । इन्द्र )
सुतः सामः परिषिक्ता मधूनि।
(२१८७) ७।२४।२ (वसिष्ठो मैत्रावरुणि. । इन्द्र )
[१०९५] १।१७७।५ ( अगस्त्यो मैत्रावरुणः। इन्द्र )
विद्याम वस्तोरवसा गृणन्तो।

अनेनो वो मरुतो यामो अस्त्व--नश्वश्चिद् यमजत्यरथीः ।
अनवसो अनभीशू रजस्तू--र्वि रोदसी पथ्या याति साधन् ७ ३४०
नास्य वर्ता न तरुता न्वस्ति मरुतो यमवथ वाजसातौ ।
तोके वा गोषु तनये यमप्सु स व्रजं दर्ता पार्ये अध द्योः ८
प्र चित्रमर्कं गृणते तुराय मारुताय स्वतवसे भरध्वम् ।
ये सहांसि सहसा सहन्ते रेजते अग्ने पृथिवी मखेभ्यः ९
त्विषीमन्तो अध्वरस्येव दिद्युत् तृषुच्यवसो जुह्वो३ नाग्नेः ।
अर्चत्रयो धुनयो न वीरा भ्राजज्जन्मानो मरुतो अधृष्टाः १०
तं वृधन्तं मारुतं भ्राजदृष्टिं रुद्रस्य सूनुं हवसा विवासे ।
दिवः शर्धाय शुचयो मनीषा गिरयो नाप उग्रा अस्पृध्रन् ११ ३४४

॥ ३४ ॥ ( ऋ० ७।५६।१-२५ )

(३४५-३९४) मैत्रावरुणिर्वसिष्ठः । त्रिष्टुप्, १-११ द्विपदा विराट् ।

क ईं व्यक्ता नरः सनीळा रुद्रस्य मर्या अधा स्वश्वाः १ ३४५
नकिर्ह्येषां जनूंषि वेद ते अङ्ग विद्रे मिथो जनित्रम् २
अभि स्वपूभिर्मिथो वपन्त वातस्वनसः श्येना अस्पृध्रन् ३
एतानि धीरो निण्या चिकेत पृश्निर्यदूधो मही जभार ४
सा विट् सुवीरा मरुद्भिरस्तु सनात् सहन्ती पुष्यन्ती नृम्णम् ५
यामं येष्ठाः शुभा शोभिष्ठाः श्रिया संमिश्ला ओजोभिरुग्राः ६ ३५०
उग्रं व ओजः स्थिरा शवांस्य--धा मरुद्भिर्गणस्तुविष्मान् ७
शुभ्रो वः शुष्मः क्रुध्मी मनांसि धुनिर्मुनिरिव शर्धस्य धृष्णोः ८
सनेम्यस्मद् युयोत दिद्युं मा वो दुर्मतिरिह प्रणङ्नः ९
प्रिया वो नाम हुवे तुराणा--मा यत् तृपन्मरुतो वावशानाः १०
स्वायुधास इष्मिणः सुनिष्का उत स्वयं तन्वः शुम्भमानाः ११ ३५५
शुची वो हव्या मरुतः शुचीनां शुचिं हिनोम्यध्वरं शुचिभ्यः ।
ऋतेन सत्यमृतसाप आय--ञ्छुचिजन्मानः शुचयः पावकाः १२
अंसेष्वा मरुतः खादयो वो वक्षःसु रुक्मा उपशिश्रियाणाः ।
वि विद्युतो न वृष्टिभी रुचाना अनु स्वधामायुधैर्यच्छमानाः १३
प्र बुध्न्या व ईरते महांसि प्र नामानि प्रयज्यवस्तिरध्वम् ।
सहस्रियं दम्यं भागमेतं गृहमेधीयं मरुतो जुषध्वम् १४ ३५८

यदि स्तुतस्य मरुतो अधीथे—त्था विप्रस्य वाजिनो हवीमन् ।
मक्षू रायः सुवीर्यस्य दात नू चिद् यमन्य आदभदरावा १५
अत्यासो न ये मरुतः स्वञ्चो यक्षदृशो न शुभयन्त मर्याः ।
ते हर्म्येष्ठाः शिशवो न शुभ्रा वत्सासो न प्रक्रीळिनः पयोधाः १६ ३६०
दशस्यन्तो नो मरुतो मृळन्तु वरिवस्यन्तो रोदसी सुमेके ।
आरे गोहा नृहा वधो वो अस्तु सुम्नेभिरस्मे वसवो नमध्वम् १७
आ वो होता जोहवीति सत्तः सत्राचीं रातिं मरुतो गृणानः ।
य ईवतो वृषणो अस्ति गोपाः सो अद्वयावी हवते व उक्थैः १८
इमे तुरं मरुतो रामयन्ती—मे सहः सहस आ नमन्ति ।
इमे शंसं वनुष्यतो नि पान्ति गुरु द्वेषो अररुषे दधन्ति १९
इमे रध्रं चिन्मरुतो जुनन्ति भृमिं चिद् यथा वसवो जुषन्त ।
अप बाधध्वं वृषणस्तमांसि धत्त विश्वं तनयं तोकमस्मे २०
मा वो दात्रान्मरुतो निरराम मा पश्चाद् दध्म रथ्यो विभागे ।
आ नः स्पार्हे भजतना वसव्ये३ यदीं सुजातं वृषणो वो अस्ति २१ ३६५
सं यद्धनन्त मन्युभिर्जनासः शूरा यह्वीष्वोषधीषु विक्षु ।
अध स्मा नो मरुतो रुद्रियास—स्त्रातारो भूत पृतनास्वर्यः २२
भूरि चक्र मरुतः पित्र्याण्यु—क्थानि या वः शस्यन्ते पुरा चित् ।
मरुद्भिरुग्रः पृतनासु साळ्हा मरुद्भिरित् सनिता वाजमर्वा २३
अस्मे वीरो मरुतः शुष्म्यस्तु जनानां यो असुरो विधर्ता ।
अपो येन सुक्षितये तरेमा—ऽध स्वमोको अभि वः स्याम २४
तन्न इन्द्रो वरुणो मित्रो अग्नि—राप ओषधीर्वनिनो जुषन्त ।
शर्मन्त्स्याम मरुतामुपस्थे यूयं पात स्वस्तिभिः सदा नः २५

॥ ३५ ॥ (ऋ० ७।५७।१-७) त्रिष्टुप् ।

मध्वो वो नाम मारुतं यजत्राः प्र यज्ञेषु शवसा मदन्ति ।
ये रेजयन्ति रोदसी चिदुर्वी पिन्वन्त्युत्सं यदयासुरुग्राः १ ३७०
निचेतारो हि मरुतो गृणन्तं प्रणेतारो यजमानस्य मन्म ।
अस्माकमद्य विदथेषु बर्हि—रा वीतये सदत पिप्रियाणाः २
नैतावदन्ये मरुतो यथेमे भ्राजन्ते रुक्मैरायुधैस्तनूभिः ।
आ रोदसी विश्वपिशः पिशानाः समानमञ्ज्यञ्जते शुभे कम् ३ ३७२

ऋधक् सा वो मरुतो दिद्युदस्तु यद् व आगः पुरुषता कराम ।
मा वस्तस्यामपि भूमा यजत्रा अस्मे वो अस्तु सुमतिश्चनिष्ठा ४
कृते चिदत्र मरुतो रणन्ताऽनवद्यासः शुचयः पावकाः ।
प्र णोऽवत सुमतिभिर्यजत्राः प्र वाजेभिस्तिरत पुष्यसे नः ५
उत स्तुतासो मरुतो व्यन्तु विश्वेभिर्नामभिर्नरो हवींषि ।
ददात नो अमृतस्य प्रजायै जिगृत रायः सूनृता मघानि ६ ३७५
आ स्तुतासो मरुतो विश्व ऊती अच्छा सूरीन्त्सर्वताता जिगात ।
ये नस्त्मना शतिनो वर्धयन्ति यूयं पात स्वस्तिभिः सदा नः ७

॥ ३६ ॥ ( ऋ० ७।५८।१-६ )

प्र साकमुक्षे अर्चता गणाय यो दैव्यस्य धाम्नस्तुविष्मान् ।
उत क्षोदन्ति रोदसी महित्वा नक्षन्ते नाकं निर्ऋतेरवंशात् १
जनूश्चिद् वो मरुतस्त्वेष्येण भीमासस्तुविमन्यवोऽयासः ।
प्र ये महोभिरोजसोत सन्ति विश्वो वो यामन् भयते स्वर्दृक् २
बृहद् वयो मघवद्भ्यो दधात जुजोषन्निन्मरुतः सुष्टुतिं नः ।
गतो नाध्वा वि तिराति जन्तुं प्र णः स्पार्हाभिरूतिभिस्तिरेत ३
युष्मोतो विप्रो मरुतः शतस्वी युष्मोतो अर्वा सहुरिः सहस्री ।
युष्मोतः सम्राळुत हन्ति वृत्रं प्र तद् वो अस्तु धूतयो देष्णम् ४ ३८०
ताँ आ रुद्रस्य मीळ्हुषो विवासे कुविन्नंसन्ते मरुतः पुनर्नः ।
यत् सस्वर्ता जिहीळिरे यदाविरव तदेन ईमहे तुराणाम् ५
प्र सा वाचि सुष्टुतिर्मघोनामिदं सूक्तं मरुतो जुषन्त ।
आराच्चिद् द्वेषो वृषणो युयोत यूयं पात स्वस्तिभिः सदा नः ६

॥ ३७ ॥ ( ७।५९।१-१२ )
( प्रगाथः= ( विषमा बृहती, समा सतोबृहती ), ७-८ त्रिष्टुप्, ९-१२ गायत्री । )

यं त्रायध्व इदमिदं देवासो यं च नयथ ।
तस्मा अग्ने वरुण मित्रार्यमन् मरुतः शर्म यच्छत १
युष्माकं देवा अवसाहनि प्रिय ईजानस्तरति द्विषः ।
प्र स क्षयं तिरते वि महीरिषो यो वो वराय दाशति २
नहि वश्चरमं चन वसिष्ठः परिमंसते ।
अस्माकमद्य मरुतः सुते सचा विश्वे पिबत कामिनः ३ ३८५

नहि वं ऊतिः पृतनासु मर्धति यस्मा अराध्वं नरः ।
अभि व आवर्त्त सुमतिर्नवीयसी तूयं यात पिपीषवः ४
ओ षु घृष्विराधसो यातनान्धांसि पीतये ।
इमा वो हव्या मरुतो ररे हि कं मो ष्व१न्यत्र गन्तन ५
आ च नो बर्हिः सदताविता च नः स्पार्हाणि दातवे वसु ।
अस्रेधन्तो मरुतः सोम्ये मधौ स्वाहेह मादयाध्वै ६
सस्वश्चिद्धि तन्व१ः शुम्भमाना आ हंसासो नीलपृष्ठा अपप्तन् ।
विश्वं शर्धो अभितो मा नि षेद नरो न रण्वाः सवने मदन्तः ७
यो नो मरुतो अभि दुर्हृणायु स्तिरश्चित्तानि वसवो जिघांसति ।
द्रुहः पाशान् प्रति स मुचीष्ट तपिष्ठेन हन्मना हन्तना तम् ८ ३९०
सान्तपना इदं हवि र्मरुतस्तज्जुजुष्टन । युष्माकोती रिशादसः ९
गृहमेधास आ गत मरुतो माप भूतन । युष्माकोती सुदानवः १०
इहेह वः स्वतवसः कवयः सूर्यत्वचः । यज्ञं मरुत आ वृणे ११

॥ ३८ ॥ ( ऋ० ७।१०४।१८ ) जगती ।

वि तिष्ठध्वं मरुतो विक्ष्वि१च्छत गृभायत रक्षसः सं पिनष्टन ।
वयो ये भूत्वी पतयन्ति नक्तभि र्ये वा रिपो दधिरे देवे अध्वरे १८ ३९४

॥ ३९ ॥ ( ऋ० ८।९४।१-१२ )
(३९५-४०६) बिन्दुः पूतदक्षो वा आङ्गिरसः । गायत्री ।

गौर्धयति मरुतां श्रवस्युर्माता मघोनाम् । युक्ता वह्नी रथानाम् १ ३९५
यस्या देवा उपस्थे व्रता विश्वे धारयन्ते । सूर्यामासा दृशे कम् २
तन् सु नो विश्वे अर्य आ सदा गृणन्ति कारवः । मरुतः सोमपीतये ३
अस्ति सोमो अयं सुतः पिबन्त्यस्य मरुतः । उत स्वराजो अश्विना ४
पिबन्ति मित्रो अर्यमा तना पूतस्य वरुणः । त्रिषधस्थस्य जावतः ५
उतो न्वस्य जोषमाँ इन्द्रः सुतस्य गोमतः । प्रातर्होतेव मत्सति ६ ४००
कदत्विषन्त सूरय स्तिर आप इव स्रिधः । अर्षन्ति पूतदक्षसः ७
कद्वो अद्य महानां देवानामवो वृणे । त्मना च दस्मवर्चसाम् ८
आ ये विश्वा पार्थिवानि पप्रथन् रोचना दिवः । मरुतः सोमपीतये ९
त्यान् नु पूतदक्षसो दिवो वो मरुतो हुवे । अस्य सोमस्य पीतये १०
त्यान् नु ये वि रोदसी तस्तभुर्मरुतो हुवे । अस्य सोमस्य पीतये ११ ४०५
त्यं नु मारुतं गणं गिरिष्ठां वृषणं हुवे । अस्य सोमस्य पीतये १२ ४०६

॥ ४० ॥ ( ऋ० १०।७७।१-८ )

(४०७-४१२) स्यूमरश्मिर्भार्गवः । त्रिष्टुप्, ५ जगती ।

अभ्रप्रुषो न वाचा प्रुषा वसु हविष्मन्तो न यज्ञा विजानुषः
सुमारुतं न ब्रह्माणमर्हसे गणमस्तोष्येषां न शोभसे १
श्रिये मर्यासो अञ्जीँरकृण्वत सुमारुतं न पूर्वीरति क्षपः ।
दिवस्पुत्रास एता न येतिर आदित्यासस्ते अक्रा न वावृधुः २
प्र ये दिवः पृथिव्या न बर्हणा त्मना रिरिच्रे अभ्रान्न सूर्यः ।
पाजस्वन्तो न वीराः पनस्यवो रिशादसो न मर्या अभिद्यवः ३
युष्माकं बुध्ने अपां न यामनि विथुर्यति न मही श्रथर्यति ।
विश्वप्सुर्यज्ञो अर्वागयं सु वः प्रयस्वन्तो न सत्राच आ गत ४ ४१०
यूयं धूर्षु प्रयुजो न रश्मिभि र्ज्योतिष्मन्तो न भासा व्युष्टिषु ।
श्येनासो न स्वयशसो रिशादसः प्रवासो न प्रसितासः परिप्रुषः ५
प्र यद् वहध्वे मरुतः पराकाद् यूयं महः संवरणस्य वस्वः ।
विदानासो वसवो राध्यस्या ऽऽराच्चिद् द्वेषः सनुतर्युयोत ६
य उदृचि यज्ञे अध्वरेष्ठा मरुद्भ्यो न मानुषो ददाशत् ।
रेवत् स वयो दधते सुवीरं स देवानामपि गोपीथे अस्तु ७
ते हि यज्ञेषु यज्ञियास ऊमा आदित्येन नाम्ना शंभविष्ठाः ।
ते नोऽवन्तु रथतूर्मनीषां महश्च यामन्नध्वरे चकानाः ८

॥ ४१ ॥ ( ऋ० १०।७८।१-८ ) त्रिष्टुप्, २,५-७ जगती ।

विप्रासो न मन्मभिः स्वाध्यो देवाव्यो न यज्ञैः स्वप्नसः ।
राजानो न चित्राः सुसंदृशः क्षितीनां न मर्या अरेपसः १ ४१५
अग्निर्न ये भ्राजसा रुक्मवक्षसो वातासो न स्वयुजः सद्यऊतयः ।
प्रज्ञातारो न ज्येष्ठाः सुनीतयः सुशर्माणो न सोमा ऋतं यते २
वातासो न ये धुनयो जिगत्नवो ऽग्नीनां न जिह्वा विरोकिणः ।
वर्मण्वन्तो न योधाः शिमीवन्तः पितॄणां न शंसाः सुरातयः ३
रथानां न येऽराः सनाभयो जिगीवांसो न शूरा अभिद्यवः ।
वरेयवो न मर्या घृतप्रुषो ऽभिस्वर्तारो अर्कं न सुष्टुभः ४
अश्वासो न ये ज्येष्ठास आशवो दिधिषवो न रथ्यः सुदानवः ।
आपो न निम्नैरुदभिर्जिगत्नवो विश्वरूपा अङ्गिरसो न सामभिः ५ ४१९

ग्रावाणो न सूरयः सिन्धुमातर आदर्दिरासो अद्रयो न विश्वहा ।
शिशूला न क्रीळयः सुमातरो महाग्रामो न यामन्नुत त्विषा ६ ४२०
उषसां न केतवोऽध्वरश्रियः शुभंयवो नाञ्जिभिर्व्यश्वितन् ।
सिन्धवो न ययियो भ्राजदृष्टयः परावतो न योजनानि ममिरे ७
सुभागान्नो देवाः कृणुता सुरत्नानस्मान्त्स्तोतॄन् मरुतो वावृधानाः ।
अधि स्तोत्रस्य सख्यस्य गात सनाद्धि वो रत्नधेयानि सन्ति ८ ४२१

॥ ४२ ॥ ( य० ३।४४ )

प्रघासिनो हवामहे मरुतश्च रिशादसः । करम्भेण सजोषसः ४४ ४२३

॥ ४३ ॥ (य० ७।३६)

उपयामगृहीतोऽसीन्द्राय त्वा मरुत्वत एष ते योनिरिन्द्राय त्वा मरुत्वते ।
उपयामगृहीतोऽसि मरुतां त्वौजसे ३६ ४२४

॥ ४४ ॥ (४२५-४२७) ( य० १७।८४-८६ )

ईदृक्षास एतादृक्षास ऊ षु णः सदृक्षासः प्रतिसदृक्षास एतन ।
मितासश्च सम्मितासो नो अद्य सभरसो मरुतो यज्ञे अस्मिन् ८४ ४२५
स्वतवाँश्च प्रघासी च सान्तपनश्च गृहमेधी च । क्रीडी च शाकी चोज्जेषी। ८५
इन्द्रं दैवीर्विशो मरुतोऽनुवर्त्मानोऽभवन् यथेन्द्रं दैवीर्विशो मरुतोऽनुवर्त्मानोऽभवन् ।
एवमिमं यजमानं दैवीश्च विशो मानुषीश्चानुवर्त्मानो भवन्तु ८६ ४२७

॥ ४५ ॥ ( य० २५।२० )

पृषदश्वा मरुतः पृश्निमातरः शुभंयावानो विदथेषु जग्मयः ।
अग्निजिह्वा मनवः सूरचक्षसो विश्वे नो देवा अवसागमन्निह २० ४२८

॥ ४६ ॥ (साम० ३५६) श्यावाश्व आत्रेयः । अनुष्टुप् ।

यदी वहन्त्याशवो भ्राजमाना रथेष्वा । पिबन्तो मदिरं मधु तत्र श्रवांसि कृण्वते ५ ४२९

॥ ४७ ॥ ( अथर्व० १।२६।३-४ )

(४३०-४३३) ब्रह्मा । ३ गायत्री, ४ एकावसाना पादनिचृत् ।

यूयं नः प्रवतो नपान्मरुतः सूर्यत्वचसः । शर्म यच्छाथ सप्रथाः ३ ४३०
सुषूदत मृडत मृडया नस्तनूभ्यो मयस्तोकेभ्यस्कृधि ४

॥ ४८ ॥ (अथर्व० ५।२६।५) द्विपदार्ची उष्णिक ।

छन्दांसि यज्ञे मरुतः स्वाहा मातेव पुत्रं पिपृतेह युक्ताः ५ ४३१

॥ ४९ ॥ (अथर्व० १३।१।३) जगती ।

यूयमुग्रा मरुतः पृश्निमातर इन्द्रेण युजा प्र मृणीत शत्रून् ।
आ वो रोहितः शृणवत् सुदानव-स्त्रिषप्तासो मरुतः स्वादुसंमुदः ३ ४३३

॥ ५० ॥ ( अथर्व० ३।१।२ )
(४३४-४३६) अथर्वा । विराड्गर्भा भुरिक् ।

यूयमुग्रा मरुत ईदृशे स्थाभि प्रेत मृणत सहध्वम् ।
अमीमृणन् वसवो नाथिता इमे अग्निर्ह्येषां दूतः प्रत्येतु विद्वान् २

॥ ५१ ॥ (अथर्व० ३।२।६) त्रिष्टुप् ।

असौ या सेना मरुतः परेषा-मस्मानैत्यभ्योजसा स्पर्धमाना ।
तां विध्यत तमसापव्रतेन यथैषामन्यो अन्यं न जानात् ६ ४३५

॥ ५२ ॥ (अथर्व० ५।२४।६) चतुष्पदातिशक्वरी ।

मरुतः पर्वतानामधिपतयस्ते मावन्तु । अस्मिन् ब्रह्मण्यस्मिन् कर्मण्यस्यां पुरोधायामस्यां
प्रतिष्ठायामस्यां चित्त्यामस्यामाकूत्यामस्यामाशिष्यस्यां देवहूत्यां स्वाहा ६ ४३६

॥ ५३ ॥ ( अथर्व० ४।१३।४ ) (४३७-४३९) शंतातिः । अनुष्टुप् ।

त्रायन्तामिमं देवा-स्त्रायन्तां मरुतां गणाः । त्रायन्तां विश्वा भूतानि यथायमरपा असत् ४

॥ ५४ ॥ ( अथर्व० ६।२२।२-३ ) २ चतुष्पदा भुरिग्जगती, ३ त्रिष्टुप् ।

पयस्वतीः कृणुथाप ओषधीः शिवा यदेजथा मरुतो रुक्मवक्षसः ।
ऊर्जं च तत्र सुमतिं च पिन्वत यत्रा नरो मरुतः सिञ्चथा मधु २
उदप्रुतो मरुतस्तां इयर्त वृष्टिर्या विश्वा निवतस्पृणाति ।
एजाति ग्लहा कन्येव तुन्नै-रुं तुन्दाना पत्येव जाया ३ ४३९

॥ ५५ ॥ ( अथर्व० ४।२७।१-७ ) (४४०-४४६) १-७ मृगारः । त्रिष्टुप् ।

मरुतां मन्वे अधि मे ब्रुवन्तु प्रेमं वाजं वाजसाते अवन्तु ।
आशूनिव सुयमानह्व ऊतये ते नो मुञ्चन्त्वंहसः १ ४४०
उत्समक्षितं व्यचन्ति ये सदा य आसिञ्चन्ति रसमोषधीषु ।
पुरो दधे मरुतः पृश्निमातॄं-स्ते नो मुञ्चन्त्वंहसः २
पयो धेनूनां रसमोषधीनां जवमर्वतां कवयो य इन्वथ ।
शग्मा भवन्तु मरुतो नः स्योना-स्ते नो मुञ्चन्त्वंहसः ३
अपः समुद्राद् दिवमुद्वहन्ति दिवस्पृथिवीमभि ये सृजन्ति ।
ये अद्भिरीशाना मरुतश्चरन्ति ते नो मुञ्चन्त्वंहसः ४
ये कीलालेन तर्पयन्ति ये घृतेन ये वा वयो मेदसा संसृजन्ति ।
ये अद्भिरीशाना मरुतो वर्षयन्ति ते नो मुञ्चन्त्वंहसः ५ ४४४

यदीदिदं मरुतो मारुतेन यदि देवा दैव्येनेदृगार ।
यूयमीशिध्वे वसवस्तस्य निष्कृते—स्ते नो मुञ्चन्त्वंहसः ६
तिग्ममनीकं विदितं सहस्व—न्मारुतं शर्धः पृतनासूग्रम ।
स्तौमि मरुतो नाथितो जोहवीमि ते नो मुञ्चन्त्वंहसः ७ ४४६

॥ ५६ ॥ ( अथर्व० ७।७७[८२] ।३ )(४४७) अङ्गिराः । जगती ।

संवत्सरीणा मरुतः स्वर्का उरुक्षयाः सगणा मानुषासः ।
ते अस्मत् पाशान् प्र मुञ्चन्त्वेनसः सांतपना मत्सरा मादयिष्णवः ३ ४४७

मरुत्सहचारी देवगण ।

## (१) मरुद्रुद्रविष्णवः ।

॥ ५७ ॥ (ऋ० ५।३।३) (४४८) वसुश्रुत आत्रेयः । त्रिष्टुप् ।

तव श्रिये मरुतो मर्जयन्त रुद्र यत् ते जनिम चारु चित्रम् ।
पदं यद् विष्णोरुपमं निधायि तेन पासि गुह्यं नाम गोनाम् ३ ४४८

## (२) मरुतोऽग्नामरुतौ वा ।

॥ ५८ ॥ (ऋ० ५।६०।१-८)

(४४९-४५६) श्यावाश्व आत्रेयः । त्रिष्टुप्, ७-८ जगती ।

ईळे अग्निं स्ववसं नमोभि—रिह प्रसत्तो वि चयत् कृतं नः ।
रथैरिव प्र भरे वाजयद्भिः प्रदक्षिणिन्मरुतां स्तोममृध्याम् १
आ ये तस्थुः पृषतीषु श्रुतासु सुखेषु रुद्रा मरुतो रथेषु ।
वना चिदुग्रा जिहते नि वो भिया पृथिवी चिद् रेजते पर्वतश्चित् २ ४५०
पर्वतश्चिन्महि वृद्धो बिभाय दिवश्चित् सानु रेजत स्वने वः ।
यत् क्रीळथ मरुत ऋष्टिमन्त आप इव सध्र्यञ्चो धवध्वे ३
वरा इवेद् रैवतासो हिरण्यै—रभि स्वधाभिस्तन्वः पिपिश्रे ।
श्रिये श्रेयांसस्तवसो रथेषु सत्रा महांसि चक्रिरे तनूषु ४
अज्येष्ठासो अकनिष्ठास एते सं भ्रातरो वावृधुः सौभगाय ।
युवा पिता स्वपा रुद्र एषां सुदुघा पृश्निः सुदिना मरुद्भ्यः ५
यदुत्तमे मरुतो मध्यमे वा यद् वावमे सुभगासो दिवि ष्ठ ।
अतो नो रुद्रा उत वा न्व१स्या—ऽग्ने वित्ताद्धविषो यद् यजाम ६
अग्निश्च यन्मरुतो विश्ववेदसो दिवो वहध्व उत्तरादधि ष्णुभिः ।
ते मन्दसाना धुनयो रिशादसो वामं धत्त यजमानाय सुन्वते ७ ४५५

अग्ने मरुद्भिः शुभयद्भिर्ऋक्वभिः सोमं पिब मन्दसानो गणश्रिभिः ।
पावकेभिर्विश्वमिन्वेभिरायुभि-र्वैश्वानर प्रदिवा केतुना सजूः ८ ५५६

## (३) सोमः मरुतः ।

॥ ५९ ॥ (अथर्व० १।२०।१) अथर्वा । त्रिष्टुप् ।

अदारसृद् भवतु देव सोमा-ऽस्मिन् यज्ञे मरुतो मृडता नः ।
मा नो विददभिभा मो अशस्ति-र्मा नो विदद् वृजिना द्वेष्या या १ ४५७

## (४) मरुत्पर्जन्यौ ।

॥ ६० ॥ (अथर्व० ४।१५।४) विराट्पुरस्ताद्बृहती ।

गणास्त्वोप गायन्तु मारुताः पर्जन्य घोषिणः पृथक् ।
सर्गा वर्षस्य वर्षतो वर्षन्तु पृथिवीमनु ४ ४५८

## (५) मरुत आपः ।

॥ ६१ ॥ (४५९-४६४) ( अथर्व ४।१५।५-१० )
(५ विराड् जगती, ७ अनुष्टुप्, ६, ८ त्रिष्टुप, ९ पथ्या पंक्तिः, १० भुरिक् ।)

उदीरयत मरुतः समुद्रत-स्त्वेषो अर्को नभ उत्पातयाथ ।
महऋषभस्य नदतो नभस्वतो वाश्रा आपः पृथिवीं तर्पयन्तु ५
अभि क्रन्द स्तनयार्दयोदधिं भूमिं पर्जन्य पयसा समङ्ग्धि ।
त्वया सृष्टं बहुलमैतु वर्ष-माशारैषी कृशगुरेत्वस्तम् ६ ४६०
सं वोऽवन्तु सुदानव उत्सा अजगरा उत ।
मरुद्भिः प्रच्युता मेघा वर्षन्तु पृथिवीमनु ७
आशामाशां वि द्योततां वाता वान्तु दिशोदिशः ।
मरुद्भिः प्रच्युता मेघाः सं यन्तु पृथिवीमनु ८
आपो विद्युदभ्रं वर्षं सं वोऽवन्तु सुदानव उत्सा अजगरा उत ।
मरुद्भिः प्रच्युता मेघाः प्रावन्तु पृथिवीमनु ९
अपामग्निस्तनूभिः संविदानो य ओषधीनामधिपा बभूव ।
स नो वर्षं वनुतां जातवेदाः प्राणं प्रजाभ्यो अमृतं दिवस्परि १० ४६४

---

# मरुद्देवता-पुनरुक्त-मन्त्रभागाः।

## ऋग्वेदस्य प्रथमं मण्डलम्।

[४] १।६।९ ( मधुच्छन्दा वैश्वामित्रः । मरुतः )
**दिवो वा रोचनादधि ।**
१।४९।१ ( प्रस्कण्व. काण्वः । उषा )
**दिवश्चिद् रोचनादधि ।**
(२७५) ५।५६।१ ( श्यावाश्व आत्रेय । मरुत. )
८।८।७ ( सध्वसः काण्वः । अश्विनौ )
**दिवश्चिद् रोचनादध्या ।**
[५] १।१५।२ ( मेधातिथि काण्व. । मरुत. )
**यूयं हि ष्ठा सुदानवः ।**
६।५१।१५ ( ऋजिश्वा भारद्वाज । विश्वेदेवा. )
(५७) ८।७।१२ ( पुनर्वत्सः काण्व. । मरुतः )
८।८३।९ ( कुमारो काण्वः । विश्वे देवाः )
[९] १।३७।४ ( कण्वो घौर । मरुतः )
**प्र व .. ।**
**देवत्तं ब्रह्म गायत ।**
( इन्द्र २०६ ) ८।३२।२७ ( मेधातिथि काण्व । इन्द्र. )
**प्र व . ।**
**देवत्तं ब्रह्म गायत ।**
[६,१०] १।३७।१,५ **क्रीळं वः शर्धो(५ क्रीळं यच्छर्धो)मारुतम्**
[१३] १।३७।८ ( कण्वो घौर । मरुत )
भिया **यामेषु रेजते ।**
(८६) ८।२०।५ ( सोभरिः काण्वः । मरुत )
**भूमिर्यामेषु रेजते ।**
[१६] १।३७।११ ( कण्वो घौर. । मरुतः )
**प्र च्यावयन्ति यामभिः ।**
(२७८) ५।५६।४ ( श्यावाश्व आत्रेयः । मरुतः )
[१७] १।३७।१२ ( कण्वो घौरः । मरुतः )
**मरुतो यद्ध वो बलं ।**
(५६) ८।७।११ ( पुनर्वत्सः काण्व. । मरुत )
**वो** दिवः ।
[२१] १।३८।१ (कण्वो घौरः । मरुतः)
**कद्ध नूनं कधप्रियः ।**
(७६) ८।७।३१ (पुनर्वत्सः काण्वः । मरुतः)
[४०] १।३९।५ (कण्वो घौरः मरुतः)
**प्र वेपयन्ति पर्वतान् ।**

प्रो आरत **मरुतो** दुर्मदा इव **देवासः सर्वया विशा ।**
५।२६।९ (वसूयव आत्रेयाः । विश्वे देवाः)
एद **मरुतो ।**
**देवासः सर्वया विशा ।**
(४९) ८।७।४ (पुनर्वत्सः काण्वः । मरुतः)
वपन्ति **मरुतो** मिहं **प्र वेपयन्ति पर्वतान् ।**
[४१] १।३९।६ (कण्वो घौरः । मरुतः)
**उपो रथेषु पृषतीरयुग्ध्वं ।**
(१२७) १।८५।५ (गोतमो राहूगण । मरुतः)
प्र यद् **रथेषु पृषतीरयुग्ध्वं ।**
[ " ] १।३९।६ (कण्वो घौरः । मरुत.)
उपो **रथेषु पृषतीरयुग्ध्वं प्रष्टिर्वहति रोहितः ।**
(७२) ८।७।२८ (पुनर्वत्स काण्वः । मरुतः)
यदेषां **पृषती रथे प्रष्टिर्वहति रोहितः ।**
[४२] १।३९।७ रुद्रा **अवो वृणीमहे ।**
१।४२।५ (कण्वो घौरः । पूषा)
पूषन्नवो **वृणीमहे ।**
[१११] १।६४।४ (नोधा गौतमः । मरुत )
**वक्षःसु रुक्माँ** अधि येतिरे **शुभे ।**
(२६०) ५।५४।११ (श्यावाश्व आत्रेयः । मरुतः)
**वक्षःसु रुक्मा** मरुतो रथे **शुभः ।**
[११३] १।६४।६ उत्सं **दुहन्ति स्तनयन्तमक्षितम् ।**
९।७२।६ (हरिमन्त आङ्गिरसः । पवमानः सोमः)
अंशुं **दुहन्ति—।**
[११९] (नोधा गौतमः । मरुतः )
**रुद्रस्य सूनुं हवसा** गृणीमसि ।
रजस्तुरं तवसं **मारुतं ।**
(३४४) ६।६६।११ (भरद्वाजो बार्हस्पत्यः । मरुतः)
तं वृधन्तं **मारुतं** भ्राजदृष्टिं **रुद्रस्य सूनुं हवसा** विवासे ।
[१२०] १।६४।१३ (नोधा गौतमः । मरुत )
नस्थौ व ऊती **मरुतो यमावत ।**
(१६५) १।१६६।८ (अगस्त्यो मैत्रावरुणिः । मरुतः)
पूर्भी रक्षता **मरुतो यमावत ।**

[१२०] १।६४।१३ (नोधा गौतमः। मरुत)
मरुतो . ।
अर्वद्भिर्वाजं भरते धना नृभिः।
२।२६।३ (गृत्समदः शौनकः। ब्रह्मणस्पतिः)
स इजनेन स विशा स जन्मना स पुत्रैर्वाजं भरते धना नृभिः।
(इन्द्रः १८०७) १०।१४७।४ (सुवेदा शैरीषि । इन्द्रः)
स इन् ।
मक्षू स वाज भरते धना नृभि.।
[१२४] १।८५।२ त उक्षितासो महिमानमाशत।
(इन्द्र ३२०३) ८।५९ (वाल० ११)।२
(सुपर्णः काण्व.। इन्द्रावरुणौ)
• इन्द्रावरुणा महिमानमाशत।
[१२७] १।८५।५ प्र यद् रथेषु पृषतीरयुग्ध्वं।
(४१) १।३९।६ (कण्वो घौरः। मरुतः)
उपो रथेषु पृषतीरयुग्ध्वं।
[१३०] १।८५।८ (गोतमो राहूगण.। मरुतः)
भयन्ते विश्वा भुवना मरुद्भ्यो।
(१६१) १।१६६।४ (अगस्त्यो मैत्रावरुणिः। मरुतः)
. . भुवनानि हर्म्या।
[१३१] १।८५।९ अहन् वृत्र निरपामौब्जदर्णवम्।
(इन्द्रः ८०९) १।५६।५ (सव्य आङ्गिरसः। इन्द्र)
[१३७] १।८६।३ स गन्ता गोमति व्रजे।
(इन्द्रः २२४४) ७।३२।१० गमत्स गोमति व्रजे।
(इन्द्रः १८२५) ८।४६।९ (वशोऽश्व्यः। इन्द्र)
(इन्द्रः ५०९) ८।५१ (वाल० ३)। ५ गमेम गोमति व्रजे
[१३८] १।८६।४ (गोतमो राहूगणः। मरुतः)
सुतः सोमो दिविष्टिषु।
उक्थं मदश्च शस्यते।
(इन्द्र ६३६) ८।७६।९ (कुरुसुतिः काण्व.। इन्द्र)
सुतं सोम दिविष्टिषु।
[इन्द्रः ३३१७] ४।४९।१ [वामदेवो गौतमः। इन्द्राबृहस्पती]
उक्थं मदश्च शस्यते।
[१३९] १।८६।५ [गोतमो राहूगणः। मरुत]
विश्वा यश्चर्षणीरभि।
[अग्निः ६९६] ४।७।४ [वामदेवो गोतम। अग्निः]
[अग्निः ९०३] ५।२३।१ [द्युम्नो विश्वचर्षणिरात्रेय.। अग्नि.]
[१४८] १।८७।४ [गोतमो राहूगणः। मरुत]
असि सत्य ऋणयावानेद्यो।
२।२३।११ [गृत्समदः शौनक.। ब्रह्मणस्पतिः]
ऋणया ब्रह्मणस्पत।
[१९१] १।१६८।९ [अगस्त्यो मैत्रावरुणिः। मरुत]
आदित् स्वधामिषिरा पर्यपश्यन्।
१०।१५७।५ [भुवन आप्त्यः साधनो वा भौवनः। विश्वे देवा]
[१९२] १।१६८।१०= [इन्द्रः ३२६४] १।१६५।१५
=[१७२] १।१६६।१५= [१८२] १।१६७।११
[अगस्त्यो मैत्रावरुणिः। मरुत्वानिन्द्रः]
एष व. स्तोमो०. ..कारोः।
एषा यासीष्ट० ..जीरदानुम्॥

# ऋग्वेदस्य द्वितीयं मण्डलम्।

[१९८] २।३०।११ तं वः शर्धं मारुत।
(२४३) ५।५३।१० तं वः शर्धं रथाना।
[२०२] २।३४।४ (गृत्समद शौनक। मरुतः)
पृषदश्वासो अनवभ्रराधस.।
(२१६) ३।२६।६ (गाथिनो विश्वामित्रः। मरुत.)

# ऋग्वेदस्य तृतीयं मण्डलम्।

[२१६] ३।२६।६ = (२०२) २।३४।४

# ऋग्वेदस्य पञ्चमं मण्डलम्।

[२३०] ५।५२।४ [श्यावाश्व आत्रेयः। मरुतः]
वो..... स्तोमं यज्ञं च धृष्णुया।
[अग्निः१०६३] ६।१६।२२ [भरद्वाजो बार्हस्पत्यः। अग्निः]
वः . . स्तोमं यज्ञं च धृष्णुया।
[२४३] ५।५३।१० त्वेषं गणं मारुतं नव्यसीनाम्।
[२९२] ५।५८।१ तमु गणं ।
[२४९] ५।५३।१६ [श्यावाश्व आत्रेय। मरुत]
रणन् गावो न यवसे।

१०।२५।१ [विमद ऐन्द्र प्राजापत्यो वा वसुकृद्वा वासुकः। सोम ]
**रणन् गावो न यवसे** विवक्षसे ।
[२६०] ५।५४।११ [श्यावाश्व आत्रेयः । मरुत ]
**विद्युतो** गभस्त्यो **शिप्रा शीर्षसु** वितता **हिरण्ययीः** ।
[७०] ८।७।२५ [पुनर्वत्सः काण्वः । मरुत ]
**विद्युद्धस्ता ...शिप्रा शीर्षन् हिरण्ययीः** ।
[२६५-७३] ५।५५।१-९ **शुभ यातामनु रथा अवृत्सत** ।
[२६७] ५।५५।३ विरोकिण **सूर्यस्येव रश्मयः** ।
(अग्निः १६५४) १०।९१।४ (अरुणो वैतहव्यः । अग्निः)
अरेपस **सूर्यस्येव रश्मयः** ।
[२७३] ५।५५।९ (श्यावाश्व आत्रेयः मरुत )
**अस्मभ्यं शर्म बहुलं वि यन्तन** ।
**अधि स्तोत्रस्य सख्यस्य गातन** ।
६।५१।५ (ऋजिश्वा भारद्वाज । विश्वे देवाः)
**अस्मभ्य शर्म बहुल वि यन्त** ।
(४२२) १०।७८।८ (स्यूमरश्मिर्भार्गव । मरुतः)
**अधि स्तोत्रस्य सख्यस्य गात** ।
[२७४] ५।५५।१०=४।५०।६ [वामदेवो गौतमः । बृहस्पति ]
**वयं स्याम पतयो रयीणाम्** ।
[२७५] ५।५६।१=१।४९।१ [प्रस्कण्व काण्व । उषा]
**दिवश्चिद् रोचनादधि** ।
[२७८] ५।५६।४=[१६] १।३७।११

**प्र च्यावयन्ति यामभिः** ।
[२८०] ५।५६।६ युङ्ग्ध्वं **ह्यरुषी रथे** ।
१।१४।१२ [मेधातिथिः काण्वः । विश्वे देवा]
युक्ष्वा **ह्यरुषी रथे** ।
[ " ] ५।५६।६ [श्यावाश्व आत्रेयः । मरुत ]
**रथे** ।
**अजिरा धुरि वोळ्हवे वहिष्ठा धुरि वोळ्हवे** ।
१।१३४।३ [परुच्छेपो दैवोदासिः । वायु ]
[२९०] ५।५७।७ [श्यावाश्व आत्रेय । मरुत]
**भक्षीय वो ऽवसो दैव्यस्य** ।
[इन्द्रः१५५३] ४।२१।१० [वामदेवो गौतम. । इन्द्रः]
**भक्षीय** ते **ऽवसो दैव्यस्य** ।
[२९१] ५।५७।८=[२९९] ५।५८।८[श्यावाश्व आत्रेय । मरुतः]
**हये नरो मरुतो मृळता नस्तुवीमघासो अमृता ऋतज्ञा** ।
**सत्यश्रुतः कवयो युवानो बृहद्गिरयो बृहदुक्षमाणाः** ।
[२९२] ५।५८।१=[२४३] ५।५३।१०
[३११] ५।८७।२ (एवयामरुदात्रेयः । मरुतः)
**दाना मह्ना तदेषाम्** ।
(९५) ८।२०।१४ (सोभरिः काण्वः । मरुत )
[३१२] ५।८७।५ (एवयामरुदात्रेय. । मरुतः)
**स्वायुधास इष्मिणः** ।
(३५५) ७।५६।११ (वसिष्ठो मैत्रावरुणिः । मरुत )
**स्वायुधास इष्मिणः** सुनिष्का ।

## ऋग्वेदस्य षष्ठं मण्डलम् ।

[३३४] ६।६६।१ (बार्हस्पत्यो भरद्वाज. । मरुतः)
**शुक्र दुदुहे पृश्निरूध** ।
(अग्निः ६७५) ४।३।१० (वामदेवो गौतमः । अग्नि.)
[३४१] ६।६६।८ **नास्य वर्ता न तरुता न्वस्ति** ।
१।४०।८ (कण्वो घौर । ब्रह्मणस्पतिः)
**नास्य वर्ता न तरुता** महाधने ।
[ " ] ६।६६।८ मरुतो यमवथ वाजसातौ ।

१०।३५।१४ (लुशो धानाकः । विश्वे देवाः)
य देवासोऽवथ **वाजसातौ** ।
१०।६३।१४ (गय प्लात । विश्वे देवा.)
[ " ] ६।६६।८ **तोके वा गोषु तनये** यमप्सु ।
(इन्द्र १९४१) ६।२५।४ (भरद्वाजो बार्हस्पत्यः । इन्द्रः)
.... यदप्सु ।
[३४४] ६।६६।११=(११९) १।६४।१२

## ऋग्वेदस्य सप्तमं मण्डलम् ।

[३५५] ७।५६।११-(३१२) ५।८७।५
[३६७] ७।५६।२३ **द्युत् मनिता वाजमर्वा** ।
(इन्द्रः २०१७) ६।३३।२ (शुनहोत्रो भारद्वाजः । इन्द्रः)
[३६९] ७।५६।२५=७।३४।२५ **यूय पात स्वस्तिभिः सदा नः** ।
[ " ] ७।५६।२५ **आप ओषधीर्वनिनो** जुषन्त ।

१०।६६।९ (वसुकर्णो वासुक । विश्वे देवाः)
**आप ओषधीर्वनिनानि** याज्ञिया ।
७।३४।२५ (वसिष्ठो मैत्रावरुणिः । विश्वे देवाः)
[३७३] ७।५७।४ (वसिष्ठो मैत्रावरुणिः । मरुतः)
**यद्व आगः पुरुषता कराम** ।
**अस्मे वो अस्तु सुमतिश्चनिष्ठा** ।

१०।१५।६ (शङ्खो यामायनः । पितरः)
यद्ध.... ।
७।७०।५ (वसिष्ठो मैत्रावरुणिः । अश्विनौ)
अस्मे वामस्तु सुमतिश्चनिष्ठा ।
[३७६] ७।५७।७ आ स्तुतासो मरुतो विश्व ऊती ।
५।४३।१० (अत्रिर्भौमः । विश्वे देवा.)
विश्वे गन्त मरुतो विश्व ऊती ।
[३७९] ७।५८।३ (वसिष्ठो मैत्रावरुणिः । मरुतः)
प्र णः स्पार्हाभिरूतिभिस्तिरेत ।
(इन्द्रः ३१९४) ७।८४।३ (वसिष्ठो मैत्रावरुणिः । इन्द्रावरुणौ)
. रेतम् ।
[३८०] ७।५८।६ आराच्चिद् द्वेषो वृषणो युयोत ।
(इन्द्रः २१११) ६।४७।१३ ( गर्गो भारद्वाज । इन्द्र )
आराच्चिद् द्वेषः सनुत युयोतु ।
[३८४] ७।५९।१ युष्माक देवा अवसाहनि ।
१।११०।७ (कुत्स आंगिरसः । ऋभव )
[ " ] ७।५९।१ ( वसिष्ठो मैत्रावरुणिः । मरुत )
प्र स क्षयं तिरते वि महीरिषो यो वो वराय दाशति ।
८।२७।१६ ( मनुर्वैवस्वत । विश्वे देवाः )

# ऋग्वेदस्याष्टमं मण्डलम् ।

[४६] ८।७।१ प्र यद् वस्त्रिष्टुभमिषं ।
(इन्द्रः २३०४) ८।६९।१ (प्रियमेध आंगिरस । इन्द्र )
प्रप्र वस्त्रिष्टुभमिष ।
[४७] ८।७।२ यदङ्ग तविषीयवो ।
(इन्द्रः २६८) ८।६।२६ (वत्सः काण्वः । इन्द्रः)
यदङ्ग ताविषीयस ।
[४७,५९] ८।७।२,१४ यामं शुभ्रा अचिध्वम् ।
[४८] ८।७।३ ( पुनर्वत्सः काण्व. । मरुतः)
धुक्षन्त पिप्युषीमिषम् ।
(इन्द्रः ३४५) ८।१३।२५ ( नारदः काण्वः । इन्द्रः )
धुक्षस्व पिप्युषीमिषमवा च न ।
(इन्द्रः५३७) ८।५४(वाल० ६)।७ (मातरिश्वा काण्वः । इन्द्रः)
धुक्षस्व पिप्युषीमिषम् ।
९।६१।१५ (अमहीयुराङ्गिरसः । पवमानः सोमः)
धुक्षस्व पिप्युषीमिषम् ।
[४९] ८।७।४ = (४०) १।३९।५
प्र वेपयन्ति पर्वतान् ।
[५३,८१] ८।७।८,३६ ते भानुभिर्वि तस्थिरे ।
[५५] ८।७।१० (पुनर्वत्सः काण्वः । मरुतः )
दुदुह्रे वज्रिणे मधु ।
(इन्द्र २३०९) ८।६९।६ (प्रियमेध आंगिरसः । इन्द्रः)
[५६] ८।७।११ = (१७) १।३७।१२
मरुतो यद्ध वो दिवः [बलं] ।
[५७] ८।७।१२ = (५) १।१५।२
यूयं हि ष्ठा सुदानवो [०व] ।
[५८] ८।७।१३ पुरुक्षु विश्वधायसम् ।
८।५।१५ ( ब्रह्मातिथिः काण्वः । अश्विनौ)

[६०] ८।७।१५ (पुनर्वत्स. काण्व । मरुत )
एषां सुम्न भिक्षेत मर्त्यः ।
८।१८।१ (इरिम्बिठिः काण्वः । आदित्या.)
[६५] ८।७।२० (पुनर्वत्सः काण्वः । मरुतः)
ब्रह्मा को वः सपर्यति ।
(इन्द्र ५९५) ८।६४।७ प्रगाथ काण्वः । इन्द्र. )
ब्रह्मा कस्त सपर्यति ।
[६७] ८।७।२२ ( पुनर्वत्स काण्वः । मरुत )
सम् स क्षोणी समु सूर्यम् । सम् ।
(इन्द्रः ५२४) ८।५२ (वाल० ४) ।१०
( आयुः काण्व. । इन्द्र.)
सम् . सं क्षोणी समु सूर्यम् ।
सम् सम् ।
[६८] ८।७।२३ = (इन्द्रः २५५) ८।६।१३
वि वृत्र पर्वशो ययु (रुजन) ।
[७०] ८।७।२५ = २६०) ५।५४।११
[७१] ८।७।२६ = (इन्द्रः १०१९) १।१३०।९
उशना यत् परावतः ।
[७३] ८।७।२८ = (४१) १।३९।६
[७६] ८।७।३१ = (२१) १।३८।१
[८०] ८।७।३५ ( पुनर्वत्स काण्वः । मरुत )
वहन्त्यन्तरिक्षेण पततः ।
१।२५।७ ( शुनःशेप आजीगर्तिः । वरुण )
पदमन्तरिक्षेण पतताम् ।
[८६] ८।२०।५ = (१३) १।३७।८
भूमि (भिया) यामेषु रेजते ।

[८९] ८।२०।८ (सोभरिः काण्वः । मरुतः)
रथे कोशे हिरण्यये ।
८।२२।९ ( सोभरिः काण्व । अश्विनौ )
रथे कोश हिरण्यये वृषण्वसू ।
[९५] ८।२०।१४ = (३१९) ५।८७।२
[१०७] ८।२०।२६ ( सोभरिः काण्व. । मरुतः )
तेना नो अधि वोचत ।
८।६७।६ (मत्स्यः साम्मदः मान्यो मैत्रावरुणिः बहवो वा मत्स्या जालनद्धाः । आदित्याः)
[ " ] ८।२०।२६ दुष्कर्ता विहृतं पुन ।
(इन्द्रः ०,८) ८।१।१२ ( मेधातिथि–मेध्यातिथी काण्वौ । इन्द्र )
[३९७]८।९४।३ तन् सु नो विश्वे अर्य आ सदा गृणन्ति कारवः।
६।४५।३३ (शंयुर्बार्हस्पत्यः । बृबुस्तक्षा)

[ " ] ८।९४।३ मरुतः सोमपीतये ।
१।२३।१० (मेधातिथिः काण्वः । विश्वे देवा )
[३९८] ८।९४।४ आस्ति सोमो अयं सुतः ।
(इन्द्रः १७६६) ५।४०।२ वृषा सोमो अयं सुतः ।
[४०१] ८।९४।८ = १।३८।१०
[४०३] ८।९४।९= १।२३।१०(मेधातिथि काण्वः। विश्वे देवाः)
[४०४-६] ८।९४।१०-१२ अस्य सोमस्य पीतये ।
= १।२२।१ (मेधातिथि काण्वः । अश्विनौ)
(इन्द्र. ३२१३) १।२३।१ (मेधातिथिः काण्वः। इन्द्रवायू )
(इन्द्रः ३३२१)४।४९।५(वामदेवो गौतमः। इन्द्राबृहस्पती)
(इन्द्र ३०५५)६।५९।१०(बार्हस्पत्यो भरद्वाजः। इन्द्राग्नी)
(इन्द्रः ६३३) ८।७६।६ (कुरुसुति काण्वः । इन्द्रः )
५।७१।३ ( बाहुवृक्त आत्रेयः । मित्रावरुणौ )

# ऋग्वेदस्य दशमं मण्डलम् ।

[४१२] १०।७७।८ = (इन्द्रः २१११) ६।४७।१३
(गर्गो भारद्वाज । इन्द्रः)
[४१६] १०।७७।८ ते हि यज्ञेषु यज्ञियास ऊमाः ।
७।३९।४ ( वसिष्ठो मैत्रावरुणिः । विश्वे देवाः)
[४२१] १०।७८।८ = (२७३) ५।५५।९



## दैवत-संहितान्तर्गत

# मरुद्देवता-मन्त्राणां उपमासूची।

अग्नय न इयानाः ६,६६,२; ३३५ मरुत. शोशुचन्।
अग्नयः न १,३४,१; १९९ शोशुवानाः।
” ” ५,८७,३; ३२० स्वविद्युत।
” ” ५,८७,६, ३२३ शुशुक्कास.।
अग्नि न १०,७८,२; ४१६ भाजमा रुक्मवक्षसः।
अग्नीनां न जिह्वा १०,७८,३; ४१७ विरोकिणः।
अग्नितपः यथा ५,६१,४, ३११ [तद्वत् प्रदीप्ता]।
अङ्गिरस न १०,७८,५, ४१९ सामभिः विश्वरूपाः।
अत्यम् न १,६४ ६; ११३ वाजिन मिहे वि नयन्ति।
अत्यासः न ७,५६,१६, ३६० स्वञ्चः।
अत्याः इव ५,५९ ३; ५०२ सुभ्वः चारव।
अत्यान् इव वाजिषु २.३४,३; २०१ अश्वान् उक्षन्ते।
अदितेः इव व्रतम् १,१६६,१२; १६९ दीर्घ दात्रम्।
अद्रयः न ५,८७,२ ३१९ अधृष्टास।
” ” आदर्दिरासः १०,७८ ६, ४२० विश्वहा।
अध्वरस्य इव ६,६६,१०. ३४३ मरुत दिद्युत्।
अन्तम् न १,३७,६ ११ सीम् धूनुथ।
अपः न १,६४,१; १०८ मनसा गिर समञ्जे।
आपः इव ८,९६,७, ४०१ सूरयः तिरः इषन्त।
” ” ५,६०,३; ४५१ सध्न्यञ्चः धवध्वे।
” ” न १०,७८,५; ४१९ निम्नैः उदभि जिगत्नवः।
अपां न उर्मयः १,१६८,२; १८४ सहस्त्रियास. मरुतः।
अपां न यामनि १०,७७,४; ४१० युष्माकं बुध्ने मही न।
अभ्रप्रुषः न १०,७७.१; ४०७ वाचा वसुप्रुषा।
अभ्रात् न सूर्यः १०,७७,३, ४०९ त्मना प्र रिरिच्रे।
आभियाः न २,३४,२, २०० वृष्टय वि द्युतयन्त।
अमतिः न १,६४,९, ११६ [तेजः] रथेषु आ तस्थौ।
अराः इव ५,५८,५; २९६ अचरमाः।
अराणां न चरमः ८,२०,१४, ९५ एषां दाना मह्ना।
अर्कम् न अभिस्वतारिः १०,७८,४; ४१८ सुष्टुभः।
अर्णः न ८,२०,१३; ९४ सप्रथ त्वेषम्।
” ” १,१६७.९, १८० मरुतः द्वेषः परि ष्टुः।
अर्यमणम् न ६,४८,१४; ३३० मन्द्रम्।
अर्यमणः न ५,५४,८ २५७ [दीप्ताः]।

अश्वा इव ५,५९,५, ३०४ [शीघ्रगन्तारः]।
अश्वास न १०,७८,५, ४१९ ज्येष्ठासः आशवः।
अश्वाः इव अध्वनः ५,५३,७, २४० क्षोदसा रजः प्र सस्रु।
अश्वाम् इव ऊधनि २,३४,६; २०४ धेनु पिप्यत।
असुर्यां इव १,१६८,७, १८९ रातिः जञ्जती।
अहा इव ५,५८,५; २९६ अचरमा।
आशून् इव अथ० ४,२७,१; ४४१ सुयमान् अह्व ऊतये।
इत्या न नभसः १,१६७,६; १७६ त्वेष प्रतीका विधतः।
इन्द्रम् न ६,४८,१४; ३३० सुक्रतुं मारुतं गणम्।
इन्द्रम् दैवी यथा वा०य० १७,८६; ४२७ यजमानं विशः।
इषुम् न १,३९,१०; ४५ द्विषं ऋषिद्विषे सृजत।
उपरा न १,१६७.३, १७४ ऋष्टिः।
उषा न रामीः अरुणैः २.३४,१२, २१० मदः ज्योतिषा।
उषसां न केतव १०,७८,७, ४२१ अध्वराश्रियः।
उस्राः इव केचित् १,८७,१; १४५ अञ्जिभिः व्यानज्रे।
ऋक्षः न ५,५६,३, २७७ अमः शिमीवान्।
ऋजिप्यासः न २,३४,४; २०३ वयुनेषु धूर्षद।
ऋष्टिषु प्रयतासु १,१६६,४; १६१ विश्वा हर्म्या भुवनानि
एतशः न अहन्यः १,१६८,५, १८७ पुरुप्रैषा [स्तोत्रे.]।
एताः न यामे ५,५४.५; २५४ योजनं दीर्घं ततान।
एधा इव १,१६६,१; १५८ तविषाणि कर्तना।
क्रिरणम् न ५.५९,३; ३०४ भूमिं रेजथ।
क्षितीनां न मर्याः १०,७८.१, ४१५ अरेपसः।
गर्भम् इव भर्ता ५,५८,७, २९८ स्वमित् शवः धुः।
गवां सर्गम् इव ५,५६,५, २७९ [मरुतां सर्गं] ह्वये।
गवाम् इव श्रृङ्गम् ५,५९,३; ३०२ उत्तमं श्रियसे [धारयथ]।
गावः न १०,३८,२, ९२ व क रण्यन्ति।
गावः न १,१६८,२; १८४ वन्ध्यास।
गावः न वन्ध्यास १,१६८.२, १८४ उक्षणः।
गावः न यवसे ५,५३.१६, २४०. [मरुतः] रणन्।
गावः न दुर्धुरः ५.५६,४; २७८ ओजसा वृथा रिणन्ति।
गाः इव चर्कृषत् ८,२०,१९; १०० वृष्ण गिरा अभि गाय।
गिरयः न १,६४,७; ११४ स्वतवस.।

गिरयः न ६,६६ ११; ३४४ अस्पृध्रन् ।
गौः इव दुध्रा भीमयु ५,५६,३; २७७ शिमीवान् अमः ।
ग्रामजितः नरः यथा ५,५४,८, २५७ मरुतः तथा ।
ग्रावाणः न सूरय १०,७८,६, ४२० सिन्धुमातरः ।
घृतम् न ८,७,१९, ६४ इष पिप्युषी ।
घृतवत् आसुवः विदथेषु १,६४,६; ११३ मरुतः पय ।
चक्षुः इव ५,५४,६; २५५ सुगं यन्तं अनु नेषथ ।
चर्म इव १,८५,५; १२७ धारा उदभि भूम व्युन्दन्ति ।
जज्झती इव ५,५२,६; २२२ मरुतः विद्युतः ।
जनयः न १,८५,१; १२३ मरुतः प्र शुम्भन्ते ।
जिगीवांसः शूराः १०,७८,४; ४१८ अभिद्यव ।
जुजुर्वान् इव विश्पतिः १,३७,८, १३ पृथिवी अज्मेषु ।
जुह्वः न अग्नेः ६,६६,१०; ३४३ मरुत त्विषीमन्तः ।
ज्योतिष्मन्तः न १०,७७,५; ४११ भामा युक्ताः ।
तायवः न ५,५२,१२, २२८ केचित् मरुत. ।
तिष्यः यथा ५,५४,१३; २६२ तथा यः [राः]न युच्छति ।
तृष्णजे न दिव उत्साः ५,५७,१, २८४ इयं अस्मत् मति. ।
त्यत् न १,८८,५, १५५ एतत् योजनं अचेति ।
दिधिषवः न १०,७८,५, ४१९ रथ्यः सुदानवः ।
दुर्मदाः इव १,३९,५; ४० मरुतः प्रो आरत ।
देवः न सूर्यः ६,४८,२१; ३३३ यस्य चर्कृतिः द्यां परि ।
देवाव्यः न यज्ञैः १०,७८,१; ४१५ मन्मभिः स्वाध्यः ।
द्यौः न ८,७,२६, ७१ ( पृथिवी अपि ) भिया चक्रदत् ।
द्यौः इव ५, ५७, ४, २८७ उरवः मरुत. ।
द्यावः इव ५,५३,५, २३८ वृष्टी यती ।
द्यावः न स्तृभिः चितयन्त; २,३४,२,२०० खादिनः मरुतः ।
द्रप्सा इव ८,७,१६; ६१ रोदसी वृष्टिभिः अनु धमन्ति ।
धन्वच्युतः न इषां यामनि १,१६८,५;१८७ [इषां यामनि] ।
धुनयः न ६,६६,१०; ३०३ वीरा. ।
धेनु न शिश्वे २,३४,८, २०६ जनाय महीं इषं च पिन्वते ।
धेनवः यथा ५,५३,७, २४० क्षोदसा रज प्र सस्नुः ।
नित्यं न सूनुम् १,१६६,२; १५९ मरुत. मधु बिभ्रतः ।
नरः न रण्वः सवने मदन्तः ७,५७,३, ३८९ विश्वं शर्धः ।
नरां न शंस २,३४,६, २०४ सवनानि आ गन्त न ।
नौः न पूर्णा ५,५९,२, ३०१ भियसा भूमिः एजते ।
पत्या इव जाया अथ०६,२२,३; ४३९ एजाति ग्लहा कन्येव
पथ्यः न १,६४,११; ११८ पर्वतान् उज्जिघ्नन्ते ।
परावतः न १०,७८,७; ४२१ योजनानि ममिरे ।
पर्जन्यः इव १,३८,१४; ३४ आस्ये श्लोकं ततन ।

पर्वताः इव १,६४,३; ११० दृढाङ्गा ] मरुतः ।
पर्वतासः ज्येष्ठास ५,८७,९, ३२६ [अतिप्रवृद्धाः] ।
पाजस्वन्तः न वीराः १० ७७ ३; ४०९ पनस्यवः मरुतः ।
पितॄणां न शंसाः १०,७८ ३; ४१७ सुरातय ।
पिशाः इव १,६४,८; ११५ सुपिशः विश्ववेदसः ।
पुत्रं न हस्तयोः पिता १,३८ १, २१ अस्मान् कद्ध दधिध्वे ।
पुत्रकृथे न जनयः ५,६१,३; ३१० जघने चोदः सक्थानि ।
पुरा यथा १,३९,७, ४२ इत्था कण्वाय नूनं गन्त ।
पृणत. न दक्षिणा १ १६८,७; १८९ वः रातिः भद्रा ।
पृथिवी इव मीळ्हुष्मती ५,५६,३; २७७ मदन्ती अस्मत् ।
प्रज्ञातार न १०,७८,२; ४१६ ज्येष्ठाः सुनीतयः ।
प्रयस्वन्त न १०,७७,४, ४१० सम्राचः आगता ।
प्रयुज न धूर्षु १०,७७,५, ४११ परिप्रुषः स्थ ।
प्रवासः न प्रसितास १०,७७,५, ४११ परिप्रुषः ।

मतिम् यथा १,६.६,२ महाम् अच्छा अनूषत ।
मनुषः न योषा १,१६७,३; १७४ गुहा चरन्ती विद्युत् ।
मरुतः रुक्मैः यथा ७,५७ ३, ३७२ एतावत् अन्ये न ।
मरुद्भ्यः न १०,७७,७, ४१३ मानुष ददाशत् ।
मर्याः इव ५,५९,३, ३०२ श्रियसे चेतथ ।
मर्याः इव ५,५९,५, ३०४ सुवृधः ।
महा ग्रामः न यामन् १०,७८.६; ४२० मरुतः त्विषा ।
माता इव पुत्रम् अथ० ५,२६,५, ४३२ विप्रत इह युक्ताः ।
मित्रम् न ५,५२,१४, २३० मारुतं गणं दाना अच्छा ।
मित्राय वा सदम् । २,३४,४, २०२ पृक्षे विश्वा भुवना ।
मुनिः इव ७,५६,८, ३५२ धुनि ।
मुष्टिहा इव हव्यः ८ २०,२०, १०१ ये सहाः सन्ति ।
मृगः न यवसे १,३८,५; ३५ जरिता अजोष्य मा भूत् ।
मृगाः इव १,६४,७, ११४ हस्तिनः वना खादथ ।
मृगाः न २,३४,१; १९९ भीमाः ।

यक्षदृशः न मर्याः ६,६६,१६; ३६० मरुतः शुभयन्त ।
यमाः इव ५,५७,४, २८७ सुसदृशः ।
युधा इव १,१६६,१; १५८ तविषाणि कर्तन ।
युयुधयः न १,८५,८, १३० जग्मय. ।
रथैः इव ५,६०,१; ४४९ वाजयद्भिः प्र भरे ।
रथानां न अराः १०,७८,४; ४१८ सनाभयः ।
रथीयन्ती इव १,१६६,५; १६२ ओषधिः प्र जिहीते ।
रथ्य न ५,८७,८; ३२५ दंसना द्वेषांसि अप युयोतन ।
रम्भिणी इव १,१६८,३, १८५ अंसेषु [लक्ष्मीः] रारभे ।
राजान इव १,८५,८; १३० त्वेषसंदृशः ।

दैवत-संहितान्तर्गत

# मरुद्देवता-मन्त्राणां सूची ।

*



## दैवत-संहितान्तर्गत-मरुद्देवतायाः

# गुणबोधक-पदानां सूची।

[ 'मरुतः' इति बहुत्वम्, 'मरुतां गणः' इति एकवचनम्। अतः गुणबोधकपदानि उभयवचनान्तानि संहितायां संदृश्यन्ते।]

## मरुतां माता।

## मरुतां रथः ।

## मरुद्देवता-संहितान्तर्गत-निपातदेवतानां

# सूची।

*

## मरुद्देवता-संहितान्तर्गत

# निपात-देवतानां वर्णानुक्रमसूची।



*

